द्व्यणुकनाशक्षणे परमाणुतेजोविभागजननात् । तेन च श्यामादिविनाशक्षण एव परमाणुतेजःसंयोगस्य विनाशादिति । अथ द्व्यणुकविनाशविशिष्टं कालमपेक्ष्य परमाणुद्वयविभागेन श्यामादिनाशक्षणे परमाणुतेजोविभागः, तेन च रक्ताद्युत्पादक्षणे परमाणुतेजःसंयोगनाश इति तेजःपरमाणुसंयोगस्य रक्तादिपूर्वक्षणवर्तित्वमित्युच्यते, तन्न, कथञ्चित् पूर्वक्षणवर्तित्वेऽपि वह्निसंयोगस्य रक्ताद्यसमवायिकारणत्वानुपपत्तेः । विनश्यदवस्थस्यासमवायिकारणत्वानङ्गीकारात् । तथा च वक्ष्यति–'स्मर तर्हि समवायिनोऽसमवायिनश्च स्वरूपं, न हि भिन्नकालं तद्भवति'इति । यद्वा, 'तेजसोऽविलम्बगमनशीलत्वाद्'इत्यादेरयमर्थः-यदैव वेगवत्तेजोऽभिघातान्नोदनाद्वा कर्म तदैव वेगवत्तेजोऽन्तराभिघातान्नोदनाद्वा तेजोऽवयवेऽपि कर्म, विलम्बहेतोरभावात् । यदैव परमाण्वोर्विभागः तदैव तेजोऽवयवयोर्विभागः, यदैव परमाण्वोः संयोगविनाशः तदैव तेजोऽवयवयोः संयोगविनाशः, यदैव द्व्यणुकनाशः तदैव तेजोनाशः, यदैव श्यामादिविनाशः तदैव तेजःपरमाणुसंयोगविनाशः समवायिकारणनाशात् । अतः श्यामादिविनाशकाग्निसंयोगस्य रक्तादिपूर्वक्षणवर्तित्वाभावान्न रक्तादिजनकत्वमिति । तदयमन्य एवाग्निसंयोगो वक्तव्य इति सुष्ठूक्तम्—अन्यस्माद्यग्निसंयोगादिति ।

किञ्च, य एवाग्निसंयोगो रक्तादीनामुत्पादकः स एव श्यामादीनां विनाशक इति विवक्षितं किं वा य एव श्यामादीनां विनाशकः स एव रक्तादीनामुत्पादक इति ? आद्ये दूषणमाह–अपि चोत्पादकस्यैवेति । येन येनाग्निसंयोगेन यद्यद्रूपादिकमुत्पादितं तेन तेनैवाग्निसंयोगेन(तत्) तद्रूपादिकं विनाशितमिति पाकोत्तरकालं घटे रूपादि न स्यादित्यर्थः ।



द्वितीयेऽपि पक्षे यावदापाकमेकोऽग्निसंयोगः किं वा ऽनेकः? आद्ये दूषणमाह—विनाशकस्येति । अग्निसंयोगस्यैकत्वाद् यावदापाकं भेदाभावादविशेषे वैजात्याभावे पाकतारतम्यानुपपत्तेः । आपाकोपक्रमे ईषद्रक्ता घटादयः, आपाकमध्ये ततोऽपि रक्ताः, आपाकान्ते ततोऽपि रक्ता इति पाकवैषम्यं न स्यादित्यर्थः । द्वितीये दूषणमाह–पुनस्तेनैवेति । विनाशकस्योत्पादकत्वेऽपि य उत्पादनसमर्थः स विनाशसमर्थो भवत्येवेति तेनैवोत्पादितरूपादिविनाशान्नीरूपाः परमाणुघटादयः स्युरित्यर्थः । अग्निसंयोगान्तरेण रूपादयः पुनरुत्पद्यन्त इत्यत आह–पुनरुत्पादकस्येति । पूर्वदोषानतिवृत्तिरिति । रूपादिसन्तानपरावृत्तिप्रसङ्ग इत्यर्थः । सतर्कं प्रमाणमभिसन्धायोपसंहारव्याजेन प्रसङ्गारूढं करोति–तस्मादिति । इदं च यद्येकं प्रमाणं रूपादिनाशोत्पादधर्मिणमुपादाय प्रवृत्तं तर्हि हेतोरसिद्धिः, रूपादिविनाशोत्पादत्वस्य रूपादिविनाशे तदुत्पादे चासिद्धत्वात् । तस्मात्पार्थिवपरमाणुरूपादिविनाशः पार्थिवपरमाणुरूपाद्युत्पादकाग्निसंयोगजन्यो न भवति रूपादिविनाशत्वात् श्यामादिविनाशवत् , पार्थिवपरमाणुरूपादयः पार्थिवपरमाणुरूपादिविनाशकाग्निसंयोगजन्या न भवन्ति रूपादित्वात् श्यामरूपादिवदिति प्रमाणद्वयं द्रष्टव्यम् । उपसंहरति–तदिदमिति ।

ननु 'तस्मिन्विनष्टे' इत्यादि 'पाकजा जायन्ते' इत्यन्तं भाष्यं–'कार्यद्रव्यं तु विनश्यति इत्यत्र किं प्रमाणम् ?' इत्यस्योत्तरत्वेनावतारितं, तदनेन भाष्येण कार्यद्रव्यनाशे किं प्रमाणमुक्तं स्यादित्यत आह–एतेन पाक इति ।

ननु भवतु पूर्वरूपादिविनाशो मा भूत्कार्यद्रव्यनाश इत्या·

शङ्कानुग्राहकं तर्कमाह-अवयवीति। अवयविनाशावयविरूपादिविनाशयोर्हेतुमद्भावोऽप्यसिद्धः, प्रकृते सत्यपि कार्यद्रव्ये रूपादिविनाशशङ्कासम्भवादित्याशङ्काश्रयविनाशं विनाऽपि रूपादिविनाशो भवन् निर्हेतुको वा स्याद् वह्निसंयोगहेतुको वा ? इति विकल्प्य प्रथमं दूषयति-कारणं विनेति। द्वितीयं पक्षं शङ्कते-नन्विति (पृ० १८५)। यो हि वह्निसंयोगात्सत्येव घटे पूर्वरूपादिविनाशमिच्छति स किं घटादिमूलकारणपरमाणूनां कियतामेव वह्निसंयोगमिच्छति किं वा सर्वेषामिति ? आद्यं दूषयति—न कतिपयेति । अत्र कारणशब्देन यावन्तो वह्निसंयोगात् श्यामादिनिवृत्तौ रक्ताद्युत्पादकास्तावन्तो विवक्षिताः, तेन तावतां यदुक्तं रूपं तदेव घटादौ न स्यादित्यर्थः। कुत इत्यत आह- न हीति। येषां परमाणूनामग्निसंयोगो न जातः ते तावच्छ्यामा एव । तेन तदारब्धो घटादी रक्तो न भवति किन्तु श्यामरक्तः स्यादिति भावः। द्वितीयं दूषयति-निःशेषपाक इति ।

पूर्वावयविनाशे प्रमाणान्तरमाह-किं चेति। इह यद्यपि रूपाद्यन्तरोत्पत्तेरवयव्यन्तरोत्पत्तौ प्रामाण्यव्युत्पादनं मुख्यतया प्रतिभाति तथापि पूर्वद्रव्यविनाशे एवास्य ग्रन्थस्य तात्पर्यम् । अन्यथा '[१]तदेवं रूपाद्यन्तरोत्पत्तिरवयव्यन्तरोत्पत्तौ प्रमाणम्'इत्यादिना पौनरुक्त्यप्रसङ्गादिति । [२]अवयव्यन्तरेत्यनेन पूर्वावयविनाशो विवक्षितः, रूपादिरिति अवयवि-

[१]'तदेवं रूपाद्यन्तरोत्पत्तिः स्थूलद्रव्योत्पत्तौ प्रमाणम्' इति पाठो मुद्रितमूलपुस्तके १८६ पृष्ठे २० पङ्क्तौ ।

[२]अत्रादर्शपुस्तके'अवयव्यन्तरेण इत्यनेन'इति पाठो वर्तते परं स पुनरुक्त्याभासक इत्युपेक्षितः ।



रूपादिरित्यर्थः। कारणगुणपूर्वकत्वे हि रक्तादीनां परमाणावपि रक्ताद्युत्पादो वाच्यः, स चावयविरहित एव परमाणावित्युक्तं 'कार्यविनाशविशिष्टं कालम्'इत्यत्र। अवयविरहितत्वं च परमाणोः श्यामावयविपरम्पराविनाशे सत्येव स्यादिति पूर्वावयविनाशसिद्धिरिति भावः। नियमादिति । व्याप्तेरित्यर्थः। ननु भवत्ववयविरूपादेः कारणगुणपूर्वकत्वनियमः, न चैतावता पूर्वघटादेर्विनाशः सिद्ध्यति; सत्येव पूर्वघटादौ वह्निसंयोगाद् घटादिपरमाणुनिष्ठश्यामादिनिवृत्तिः, ततोऽन्यस्माद् वह्निसंयोगात्परमाणुमात्रे रक्ताद्युत्पत्तिः, परमाणुरक्तादिभ्यो द्व्यणुके रक्ताद्युत्पत्तिरित्येवं घटादिरूपादेः कारणगुणपूर्वकत्वनिर्वाह इति शङ्कते-अग्निसंयोगादिति । अत्र च प्रथममिदमेव समाधानं वक्तव्यम्—यदि परमाणौ रक्तादीनामुत्पादोऽङ्गीकृतस्तर्हि कार्यद्रव्यरहित एवासावङ्गीकरणीयः 'कार्यविनाशविशिष्टं कालमपेक्ष्य'इत्यत्रोपपादितत्वात्; तथा च त्र्यणुकादेर्घटपर्यन्तस्य विनाशः। तदिदं समाधानं स्पष्टमुक्तप्रायमित्युपेक्ष्य समाधानान्तरमाह-न यत्रेति । घटादयो न वह्निसंयोगविनाश्यरूपादिमन्तः वह्निसंयोगजरूपादिरहितत्वाज्जलवत् । घटादीनां च वह्निसंयोगविनाश्यरूपादिमत्त्वे वह्निसंयोगजरूपादिमत्त्वप्रसङ्गः परमाणुवदिति तर्कः। घटादिरूपादौ वह्निसंयोगस्य जनकत्वसम्भवात् प्रकृतहेतोरसिद्धत्वं तर्कस्य चेष्टापादनदोषग्रस्तत्वमित्याशङ्क्य घटादिरूपादौ वह्निसंयोगस्यैव कारणत्वं मन्यसे किं वा कारणगुणसहितस्येति विकल्प्य प्रथमं दूषयति-अग्निसंयोगस्यैवेति । अवयविरूपादेः कारणगुणपूर्वकत्वमेवासिद्धमिति शङ्कते-व्याहन्यतामिति । समाधत्ते-आमद्रव्याणामिति द्वितीयं पक्षं दूषयति-तस्मात् परमाणुषु पाकादेवेति ।

यथा परमाणुषु वह्निसंयोगात्कारणगुणनिरपेक्षाद्रूपादयः तथाऽवयविनि कारणगुणेभ्यो वह्निसंयोगनिरपेक्षेभ्यो रूपादयः, अन्यथा आमदशायां श्यामादीनामनुत्पादप्रसङ्गादिति भावः । केषुचित् पुस्तकेषु 'यद्यप्येकस्योत्पादविनाशहेतुत्वम्'इत्यादिकः 'आमदशायां श्यामादीनामनुत्पादप्रसङ्गात्'इत्यन्तो ग्रन्थसन्दर्भो 'द्व्यणुकविनाशक्षणमारभ्य पञ्चमे क्षणे पुनरन्यद् द्व्यणुकमुत्पद्य रूपादिमद्भवति'इति प्रक्रियामध्ये पठ्यते,तदनुपपन्नं, व्याख्यानपरग्रन्थसन्दर्भस्य एतद्व्याख्यानेकभाष्यव्याख्यानोत्तरकालभाविप्रक्रियाव्युत्पादनमध्येऽत्यन्तमसङ्गतत्वात् । तस्माद्[(१)'वह्निसंयोगात]पाकजा[जायन्ते]इति रूपरसगन्धस्पर्शाः संक्षेपेणोक्ताः' इत्येतस्मादनन्तरं 'तस्मात् परमाणुपाकादेव रूपादिविनाशोत्पादौ'इत्येतस्माच्च पूर्वं 'यद्यप्येकस्योत्पादविनाशहेतुत्वम्'इत्यादिः 'आमदशायां श्यामादीनामनुत्पादप्रसङ्गात्'इत्यन्तो ग्रन्थसंदर्भो येषु पुस्तकेषु पठ्यते तान्येव शुद्धानि, अन्यानि तु लेखकदोषवशादसमीचीनपाठवन्तीति द्रष्टव्यम् ।

उक्तेऽर्थे प्रयोगानुपदर्शयति—तदमी प्रयोगा इति । पार्थिवावयविरूपादीनि । पार्थिवावयविरूपरसगन्धस्पर्शा इत्यर्थः । आश्रयविनाशादेवेत्येवकारेण वह्निसंयोगो निवर्त्यते । तेनाऽऽपाकनिक्षिप्तकुम्भरूपमाश्रयविनाशविनाश्यं वह्निसंयोगाविनाश्यं च अवयविरूपत्वात् पाटितपटरूपवदिति प्रयोगार्थः । एवं रसादीनपि पक्षीकृत्य प्रयोगा द्रष्टव्या इति ग्रन्थार्थः संमतः । किमत्र यत्किञ्चिदाश्रयविनाशविनाश्यत्वं साध्यम् उत पाकनिक्षिप्तकुम्भरूपाद्याश्रयनाशविनाश्यत्वम्? नाद्यः, यत्किञ्चिदाश्रयविनाशविनाश्यत्वे आपाकनिक्षिप्तकुम्भाविनाशासिद्धेरर्थान्तरत्वाच्च । नापि द्वितीयः, आपाकनिक्षिप्तकुम्भविनाशविनाश्यत्वस्य क्वचिदप्यप्रसिद्धत्वाद् दृष्टान्तस्य साध्यविकलत्वाच्च । सम्मुग्धे चाश्रयविनाशविनाश्यत्वे साध्ये रूपत्वाभाव उपाधिः । पक्षपक्षतुल्यव्यतिरिक्तस्य परमाणुरूपादेर्व्यावर्त्यत्वान्न पक्षेतरता । पाटितपटरूपे आश्रयविनाशविनाश्येऽपि रूपत्वसम्भवात साध्यव्यापकताभङ्ग इत्यपि न । तत्राप्याश्रयविनाशविनाश्यत्वस्य परं प्रत्यसिद्धेः । अत एव सम्मुग्धेऽप्याश्रयविनाशविनाश्यत्वे साध्यविकलता दृष्टान्तस्य दुर्वारा । आपाकनिक्षिप्तकुम्भरूपमग्निसंयोगविनाश्यमवयविरूपत्वादित्याद्यपि न युक्तम् । आपाकनिक्षिप्तपृथिवीरूपत्वानधिकरणत्वेन सोपाधिकत्वात तद्विरहेण सत्प्रतिपक्षत्वाच्च । पार्थिवपरमाणुरूपस्य पक्षतुल्यव्यतिरिक्तस्य व्यावर्त्यत्वान्न पक्षेतरत्वं, नापि प्रतिपक्षानुमाने दृष्टान्ताभाव इति । तत् कारणगुणेभ्य एवोपपद्यते तत एव तद्वदेवेत्यस्यार्थः—आपाकोद्धृतकुम्भरूपं कारणगुणजन्यम् अवयविरूपत्वात्पटरूपवदित्यादि, सोऽपि न, प्राचीनादेव न्यायात् । आपाकोद्धृतकुम्भकारणपरमेश्वरज्ञानादिना सिद्धसाधनस्य वैशेषिकैः परिहर्तुमशक्यत्वात् । न च कारणशब्देनात्र समवायिकारणं विवक्षितमिति नेश्वरज्ञानादिना सिद्धसाधनत्वमिति वाच्यम् । तस्यापि स्वाश्रितसकलकार्यं प्रति समवायिकारणत्वात् । न च समवायिकारणशब्देनाऽऽपाकोद्धृतकुम्भादिसमवायिकारणमात्रं विवक्षितमित्यपि युक्तम् । कुम्भावयवसंयोगादिनाऽर्थान्तरस्य दुर्वारत्वात् । न चाऽऽपाकोद्धृतकुम्भसमवायिकारणरूपजन्यमापाकोद्धृतकुम्भरूपमित्यपि युक्तम्, अप्रसिद्धविशेषणत्वादिति । घटादिद्व्यणुकेष्वित्यादेरयमर्थः—

(१) अत्रत्यानि कंसान्तर्गतान्यक्षराणि मुद्रितमूलपुस्तके नोपलभ्यन्ते १८४ पृष्ठे ३ पङ्क्तौ ।

परम्परयाऽऽपाकक्षिप्तघटारम्भकत्र्यणुकद्व्यणुकाग्निसंयोगास्त्र्यणुकारम्भकसंयोगविनाशकविभागारम्भककर्माऽसमवायिकारणं त्र्यणुकद्व्यणुकाग्निसंयोगत्वात् मूषाग्निसंयुक्तसुवर्णत्र्यणुकद्व्यणुकाग्निसंयोगवत् । यद्वा, आपाकनिक्षिप्तघटारम्भकत्र्यणुकद्व्यणुकाग्निसंयोगा द्रव्यारम्भकसंयोगविनाशजनकविभागजनककर्मासमवायिकारणं कार्यद्रव्यवदग्निसंयोगत्वात्स्थूलसुवर्णावयवाग्निसंयोगवदिति । तेन यत्किञ्चित्पटाद्यारम्भकसंयोगविरोधिविभागजनकतन्त्वादिक्रियाजनकत्वसिद्धेरर्थान्तरतेति निरस्तम् । प्रत्यासत्तेरभावेन त्र्यणुकाग्निसंयोगस्य तन्तुकर्मासमवायिकारणत्वानुपपत्तेः । गगनाद्यग्निसंयोगादिना व्यभिचारश्च दूरनिरस्तः गगनादेर्द्रव्यानाश्रयत्वात् इति, सोऽपि मन्दः । पक्षीकृतसंयोगाधिकरणवह्निनिष्ठत्वाभावेन हेतुद्वयस्य सोपाधित्वात् । प्रकृतवह्निनिष्ठरूपादेर्विपक्षस्य व्यावर्त्यत्वान्न पक्षेतरता । उपाधिविपर्ययेण सत्प्रतिपक्षत्वात् प्रथमदृष्टान्तस्य संदिग्धसाध्यत्वाच्च । मूषाग्निसुवर्णद्व्यणुकसंयोगस्य त्र्यणुकारम्भकसंयोगविरोधिविभागजनककर्माऽसमवायिकारणत्वे मानाभावात्, त्र्यणुकविनाशस्य परमाणुसंयोगविनाशजन्यद्व्यणुकविनाशादप्युपपत्तेः । त्र्यणुकक्रियाविभागादिन्यायेन सुवर्णचतुरणुकादेरन्त्यावयविपर्यन्तस्य विनाशोपपत्तेस्त्र्यणुकविनाशेऽपि मानाभावाच्च, सुवर्णस्य स्थूलावयवाग्निसंयोगस्य सुवर्णारम्भकसंयोगविरोधिविभागजनककर्मासमवायिकारणत्वे मानाभावेन द्वितीयदृष्टान्तस्य सन्दिग्धसाध्यत्वाच्च, परमाणुसंयोगविनाशजन्यद्व्यणुकाश्रयविनाशादप्यन्त्यावयविसुवर्णविनाशोपपत्तेः । एतेन द्व्यणुकशब्देन तदारम्भकः परमाणुरभिप्रेतः, तेन द्व्यणुकवत्परमाण्वग्निसंयोगः द्व्यणुकारम्भ-



कसंयोगप्रतिद्वन्द्विविभागजनकक्रियाऽसमवायिकारणं द्व्यणुकवत्परमाण्वग्निसंयोगत्वात्सुवर्णद्व्यणुकवत्परमाणुमूषाग्निसंयोगवदित्यपि व्याख्यानं निरस्तम् । तस्मादाचार्योक्तमनुमानत्रयमपि न युक्तमिति नवीनाः ।

तदयुक्तम् । प्रयोगार्थापरिज्ञानात् । तथाहि—**पार्थिवावयविरूपादीनि** । आपाकनिक्षिप्तैतत्कुम्भरूपादीत्यर्थः । **आश्रयविनाशादिति** । एतत्कुम्भविनाशादित्यर्थः । अवयविरूपादित्वादिति । एतत्कुम्भरूपादित्वादित्यर्थः । पाटितपटरूपादिवदिति व्यतिरेकदृष्टान्तः । प्रयोगस्तु आपाकनिक्षिप्तैतत्कुम्भरूपमेतत्कुम्भविनाशविनाश्यमेतत्कुम्भरूपत्वान्न यदेवं न तदेवम्, यथा घटरूपम् । एवं रसादीनपि पक्षीकृत्य प्रयोक्तव्यम् । न चैतत्कुम्भविनाशविनाश्यत्वासिद्धेरप्रसिद्धविशेषणता । एतत्कुम्भविनाशः स्वस्वेतरावृत्तिकिञ्चिद्विनाशकधर्माधिकरणं मेयत्वाद्घटवत् इति सामान्यतः साध्यसिद्धेः । उपाधिप्रतिरोधौ तु केवलव्यतिरेकित्वादेवात्र दुर्वचौ । तत् सिद्धं श्यामादिनिवृत्तिपूर्वक्षणे कुम्भविनाशः। तत्कारणगुणेभ्य एवेत्यत्र तच्छब्देनाऽऽपाकोद्धृतकुम्भो विवक्षितः, कारणशब्देन तदवयवः, गुणशब्देन तद्गता रूपादयः । **तत एवेति** । आपाकोद्धृतकुम्भरूपत्वादित्यर्थः । तद्वदेवेति व्यतिरेकेण पटरूपाद्युदाहरणम् । प्रयोगस्तु आपाकोद्धृतकुम्भरूपमापाकोद्धृतकुम्भावयवरूपाऽसमवायिकारणम् एततकुम्भरूपत्वान्न यदेवं न तदेवं यथा घटरूपमिति । न चाप्रसिद्धविशेषणत्वम्, एतत्कुम्भावयवरूपं किञ्चिदसमवापिकारणम् अवयवरूपत्वात्तन्तुरूपवदित्यादिना साध्यप्रसिद्धेः । एवं रसादिष्वपि प्रयोक्तव्यम् । आश्रयविनाशादित्येवकारेण वह्निसंयोगाविनाश्यं विवक्षितम् । प्रयोगस्तु आपाकनिक्षिप्तकुम्भरूपादिकं स्वस्वेतरवृत्तित्वरहित-

वह्निसंयोगाविनाश्यधर्माधिकरणं मेयत्वाद् घटवदिति । कारणगुणेभ्य एवेत्येवकारेण वह्निसंयोगाजन्यत्वं दर्शयति । प्रयोगस्तु आपाकोद्धृतकुम्भरूपादि स्वस्वेतरावृत्तिवह्निसंयोगाजन्यधर्माधिकरणं मेयत्वाद् घटवदिति । घटादिद्व्यणुकेष्वग्निसंयोगा इति आपाकनिक्षिप्तकुम्भमूलकारणद्व्यणुकवत्परमाण्वग्निसंयोग इत्यर्थः । द्रव्यारम्भकेत्यत्र द्रव्यपदेन प्रकृतद्व्यणुकमभिप्रेतम् । क्रियाहेतव इति । क्रियासमवायिकारणमित्यर्थः । प्रयोगस्तु अग्रमापाकनिक्षिप्तकुम्भद्व्यणुकवत्परमाणुवह्निसंयोगः एतद्व्यणुकारम्भकसंयोगविनाशकविभागजनकक्रियासमवायिकारणम् एतत्परमाणुवह्निसंयोगत्वान्न यदेवं न तदेवं, यथा घट इति । न चैतद्व्यणुकारम्भकसंयोगविनाशकविभागजनकक्रियासमवायिकारणासिद्धेरप्रसिद्धविशेषणता । एतद्व्यणुकारम्भकसंयोगोऽसमवायिकारणजन्यक्रियाजन्यविभागविनाश्यत्वव्यतिरिक्ततद्धर्मत्वानधिकरणाधिकरणं मेयत्वाद्घटवदिति तत्सिद्धेः । एवमन्येऽपि यथास्थानमाचार्यप्रयोगाः केवलव्यतिरेकितया समर्थनीयाः ।

भोगिनामदृष्टापेक्षादात्माणुसंयोगादित्यत्र भोगिनामणुसंयोगादित्येतावतैवाऽऽत्माणुसंयोगो लभ्यते भोगिनामात्मत्वादेवेति व्यर्थमात्मग्रह[णमि]त्यत आह—आत्मग्रहणमिति (पृ. १८६) । स्फुटार्थमिति । आत्मन एव भोगित्वं न तु सांख्यवदन्तःकरणस्येति निश्चयार्थम्, अतो न व्यर्थमित्यर्थः । अणुषु कर्मोत्पत्तावित्यत्राणुशब्देन यदि द्व्यणुकमभिप्रेतं तर्हि द्व्यणुकेषु कर्मोत्पत्तौ द्व्यणुकानामेव संयोगः, ततश्च त्र्यणुकोत्पत्तिरेव स्यादिति द्व्यणुकादिप्रक्रमेणेति न घटत इत्याशङ्क्याणुपदं व्याचष्टे—अणुष्विति चेति । जात्यभिप्रायमेकवचनं परमाणुसं-



योगानां बहुत्वादिति शेषः । रूपादेव रूपमुत्पद्यते इति । अत्र पूर्वोक्तव्यतिरेकि प्रमाणम् । न स्पर्शादिति । अत्र घटावयवस्पर्शो न रूपासमवायिकारणं स्पर्शत्वाद्वायुपरमाणुस्पर्शवदित्यादि । एवं घटावयवगन्धो रसश्च न रूपासमवायिकारणं गन्धत्वाद्रसत्वादन्त्यावयविगन्धरसवदिति प्रयोक्तव्यम् । ननु वायुपरमाणुस्पर्शोऽपि रूपासमवायिकारणमस्तु तेन साध्यविकलो 'वायुस्पर्शवत्'इति दृष्टान्त इत्यत आह—वायावपीति । तदुत्पत्तिप्रसङ्गादिति । रूपोत्पत्तिप्रसङ्गादित्यर्थः । यदि वाय्ववयवस्पर्शो रूपासमवायिकारणं तर्हि तदारब्धे वायौ रूपोत्पत्तिर्दुर्वारेत्यर्थः । रसगन्धयो रूपासमवायिकारणत्वे बाधकं तर्कमाह—रसादेस्तदुत्पत्ताविति । रूपस्य रसासमवायिकारणत्वे रसत्वप्रसङ्गः रसवदेव । एवमनुद्भूतावयवरसाऽसमवायिकारणत्वाद् वज्रादिरूपस्यानुद्भूतत्वप्रसङ्गः । एवमुद्भूतमाधुर्यावयवरसशर्करादिरूपादौ माधुर्योद्भवप्रसङ्गः शर्करामाधुर्यवदेव । रूपस्य रसासमवायिकारणत्वे बाधकं तर्कमाह—एवं रूपादिति । पार्थिवावयवरूपं न रसासमवायिकारणं रूपत्वात् तेजःपरमाणुरूपवदिति भावः । तेजःपरमाणुरूपमपि रसासमवायिकारणमस्तु ततश्च साध्यविकलत्वं दृष्टान्तस्येत्यत आह—तेजसश्चेति । यदि तेजःपरमाणुरूपं रसासमवायिकारणं स्यात् तर्हि द्व्यणुकादिप्रक्रमेण महति तेजसि जातो रस उपलभ्येतेत्यर्थः । नन्वनेन भाष्येण द्रव्यान्तरोत्पत्तिरित्यर्थः । तदवयवान्तरादौ किं प्रमाणमुक्तं स्यादित्यत आह—तदेवमिति । स्थूलद्रव्योत्पत्ताविति । स्थूलद्रव्यान्तरोत्पत्तावित्यर्थः । द्रव्यारम्भानुगुणावयवक्रियाया इति [पृ. १८७] । अत्र द्रव्यारम्भानुगुणक्रियात्वमवयवित्वञ्च एकैकं स्पर्शादिमत्युत्पादनियतं न तु विशिष्टं

व्यभिचाराभावात् । ननु स्पर्शाद्युत्पत्तेः पूर्वं तन्त्वादौ क्रियोत्पत्तौ बाधकाभावात् कथमवयवक्रियात्वादेः स्पर्शादिमत्युत्पादानियम इत्याशङ्कां वारयितुं यथाक्रमं परमाण्वादौ तन्त्वादौ च स्पर्शादिविरहक्रिया भवन्ती किं रक्ताद्युत्पत्तितन्त्वाद्युत्पत्तिक्षणव्यतिरिक्ते क्षणे भवेत् किं वा रक्ताद्युत्पत्तिक्षणे एवेति विकल्प्य प्रथमं दूषयति—**रूपादिविरहेणेति** । रूपस्पर्शाद्युत्पत्तौ श्यामादिचरमवृत्तेर्द्रव्यस्य च कारणत्वात् द्वितीयादिक्षणे स्पर्शविरहो दुर्घट इत्यर्थः । द्वितीयं दूषयति—**कर्मणश्चेति** । रक्ताद्युत्पत्तिक्षणे द्रव्यान्तरभवक्रियाहेतोः स्पर्शस्याभावात् । तन्त्वाद्युत्पत्तिक्षणे चाभिघातादीनां सर्वेषां कर्महेतूनामभावाच्च कर्म दुर्घटमित्यर्थः । **तर्कशेषमिति** । अवशिष्टं तर्कमित्यर्थः । कार्यद्रव्याविनाशाभावे तद्रूपादिविनाशो न स्यात् तद्धेतुकत्वादित्युक्त एव तर्कः, अयं त्ववशिष्ट इति भावः । **अवयविनः प्रासावपीति** । अवयविनो वह्निसंयोगोऽपीत्यर्थः । **बाह्यावयवावष्टम्भेनेति** । बाह्यैर्घटाद्यवयवैरग्नेः प्रतिषिद्धत्वेनेत्यर्थः । **कार्यद्रव्यविनाशादिति** । यदि सकलत्र्यणुकारम्भकद्व्यणुकमध्ये तेजःप्रवेशो नास्ति न तर्हि तन्मध्यवर्तिषु परमाणुषु पाकः, अतः सकलत्र्यणुकारम्भकद्व्यणुकमध्ये तेजःप्रवेशे सति परस्य द्व्यणुकसंयोगविनाशसकलत्र्यणुकादिकार्यविनाशो दुर्वार इत्यर्थः । ननु सकलद्व्यणुकमध्ये तेजःप्रवेशादस्तु नाम त्र्यणुकादिकार्यविनाशः, द्व्यणुकनाशस्तु निर्बीजः परमाणुद्वयमध्ये तेजःप्रवेशनमन्तरेणापि आरब्धद्व्यणुकपरमाणुतेजःसंयोगमात्रेण वा पाकोत्पत्तिरित्याशङ्क्य भाष्यतात्पर्यमाह—**अयमाशय इति** । पार्थिवद्व्यणुकारम्भकपरमाणुतेजःसंयोगः पार्थिवपरमाणौ द्व्यणुकारम्भकसंयोगविनाशक-



विभागजनकं कर्म जनयत्येवेति द्व्यणुकविनाशोऽपि दुर्वार एवेत्यर्थः । **यत्तज्जन्माऽतिरिक्तकर्मजनकत्वादिति** । ततो वेगातिशयस्पर्शातिशयवतस्तेजसो जन्म यस्याभिघातादेः स तज्जन्मा असौ कार्यद्रव्यं पूर्वव्यूहात्प्रच्यावयति । अत्र हेतुरतिरिक्तकर्मजनकत्वादिति । यत्कर्म द्रव्यारम्भकसंयोगाविरोधिविभागजनकं न भवति ततोऽतिरिक्तं द्रव्यारम्भकसंयोगविनाशकविभागजनकं पार्थिवपरमाणौ यत्कर्म तज्जनकत्वादित्यर्थः । क्वचित्तु यत्तज्जन्माभिघातः कर्मजनकत्वादिति पाठः स तु सम्यगेवेति । **अन्यथेति**[पृ.१८८] । यदि तेजःसंयोगः सर्वव्यूहान्न प्रच्यावयतीत्यर्थः कुत इयत आह—**सान्तरत्वे इति** । निबिडावयवारब्धक्षीरादेः सान्तरत्वानुपपत्तौ अन्तरालमध्ये न प्रविशति । प्रवेशनमलभमाने वह्नौ क्षीरादेरूर्ध्वतापो न स्यादित्यर्थः । ननु युक्तौ तेजःसंयोगेन क्षीरादेः पूर्वव्यूहभङ्गव्यूहान्तरोत्पादौ आरम्भकशैथिल्यात्, घटाद्यारम्भकसंयोगस्तु कठिन इति न तत्र तेजःसंयोगेन पूर्वव्यूहभङ्गव्यूहान्तरोत्पादाविति शङ्कते—**मृदुसंयोगेनेति । तन्दुलादीनामिति** । अत्र कठिनसंयोगवतामिति शेषः । **तथादर्शनादिति** । पूर्वव्यूहभङ्गव्यूहान्तरोत्पाददर्शनादित्यर्थः । ननु भवतु तण्डुलादीनां क्षीराद्यपेक्षया कठिनसंयोगारब्धत्वं, घटाद्यपेक्षया मृदुसंयोगारब्धत्वमेवेति तेषामपि वह्निसंयोगात्पूर्वव्यूहभङ्गव्यूहान्तरोत्पादौ संभवतः, न तु घटादेस्ततोऽपि कठिनसंयोगारब्धस्येति शङ्कते—**तेषामपीति** । समाधत्ते—**नातिदृढानामिति** । घटापेक्षयाऽतिकाठिनसंयोगारब्धवज्रादेर्वह्निना पूर्वव्यूहभङ्गव्यूहान्तरोत्पाददर्शनात् घटादेस्तौ सुतरां दुर्वाराविति सिद्धो द्व्यणुकादेर्नाश इत्यर्थः । **वज्रादेरिति** । कठिनसंयोगारब्धत्वेऽपि वज्राग्निसंयोगस्य सा-

तिशयत्वाद् वज्रे पूर्वव्यूहभङ्गव्यूहान्तरोत्पादौ संभवतो घटादिवह्निसंयोगस्य तु निरतिशयत्वान्न तत्र पूर्वव्यूहभङ्गव्यूहान्तरोत्पादौ संभवत इति शङ्कते—**सातिशय इति** । पूर्वव्यूहभङ्गव्यूहान्तरोत्पादकवज्रादिवह्निसंयोगेऽतिशयो भवन् किं प्रथमादिवज्राग्निसंयोगादिव्यावृत्तो जातिविशेषो भवेत् किं वा बहुतरप्रथमादिवज्राग्निसंयोगसाहित्यम् ? नाद्यः, मानाभावादित्याह—**क इति** । द्वितीयं शङ्कते—**बह्वभ्यास इति** । प्रथमादिवज्राग्निसंयोगानामन्त्यवज्राग्निसंयोगसाहित्यं किं स्वजन्यातिशयद्वारेण किं वा स्वरूपेण ? आद्ये पक्षे दूषणमाह—**न प्रथमस्येति** । प्रथमादिसंयोगोऽतिशयहेतुरिति सिद्धान्तविरुद्धमित्यकिञ्चित्करत्वम् । द्वितीयं दूषयति—**न हीति** । ननु पूर्वव्यूहभङ्गव्यूहान्तरोत्पादे वह्निसंयोगस्य प्रथमादिबहुतरसंयोगसाहित्यमनुपयोगि तर्हि तेनैव न्यायेन घटादिपाकेऽपि वह्निसंयोगस्य प्रथमादिवह्निसंयोगसाहित्यमुपयोगीत्यापाकनिहितकुम्भे प्रथमक्षणवत् क्षणान्तरपाके विशेषो न स्यादित्याशङ्क्योपसंहारव्याजेन परिहरति—**तस्मादिति** । अत्र पूर्वरूपविनाशसहितस्याग्निसंयोगस्योत्तरोत्तररूपादिविशेषजनकत्वात् पाके विशेषो न घटत इति विवक्षितम् । शरीरादौ पाकजोत्पत्तिः प्रत्यहं व्युत्पादनीयेति ख्यापयितुं शरीरादेर्दृष्टान्ततयोपपादनं न तूभयसिद्धतया । **परमाण्वपगम इति** । परमाणुसंयोगनाश इत्यर्थः । **अन्यथेति** । यद्यसमवायिकारणसंयोगनाशो न द्व्यणुकादिनाशहेतुः तर्हि परमाणोर्नित्यत्वात् समवायिकारणनाशस्यापि नाशहेतोरनुपपत्तेर्विनाशकारणरहितत्वेन गगनवद् द्व्यणुके नित्यत्वापत्तिरित्यर्थः । **त्रसरेणुरत्र द्व्यमिति** । अत्र नश्यतीति शेषः । **तत्कार्यमिति** । अत्रापि नश्य-



तीति शेषः । **अन्यथेति** । द्व्यणुकादिनाशेऽपि त्र्यणुकाद्यवस्थान इत्यर्थः । **तदवयवेति** । ये नष्टा विद्यन्ते च ते तावच्छब्देन उक्ताः[पृ.१८०.]। **संवृतपटवदिति** । घटिकापन्नपटवदित्यर्थः । घटादेः परिमाणसंकोचो नाम किं पटवद्घटावयवानां प्रत्यावृत्य परस्परसंयोगः किं वा न्यूनपरिमाणम् ? प्रथमं विकल्पं दूषयति—**स हि न तावदवयवानां संयोगविशेष इति** । **परिमाणविशेष इति** । न्यूनं परिमाणमित्यर्थः । **सत्येव पूर्वस्मिन्नधिके परिमाणेति** । तस्मिन्नेव घटादौ न्यूनपरिमाणोदय इति पक्षं दूषयति—**नाद्य इति** । **भिन्नपरिमाणस्येति** । न्यूनाधिकपरिमाणस्येत्यर्थः । पूर्वस्मिन्नधिकपरिमाणे नष्टे तस्मिन्नेव घटादौ न्यूनपरिमाणोदय इति द्वितीयं पक्षं दूषयति—**न विनाश इति** । **यावद्द्रव्यभावित्वादिति** । सति द्रव्येऽविनाशनियमादित्यर्थः । हेत्वन्तरमाह—**आश्रयेति** । **आश्रयावयवेति** । परिमाणाश्रयस्य घटादेरवयवाः त्रसरेण्वादयस्तेषां विश्लेषः संयोगविनाशः । यद्वा, तेषामेव विनाशो घटगतपरिमाणनाशकोऽस्तु । तदसिद्धमाश्रयविनाशविनाश्यत्वं परिमाणस्येत्यर्थः । समाधत्ते—**अवयवेति** । अन्वयव्यतिरेकाभ्यां हि कारणत्वावगमः । अवयवसंयोगविनाशाऽवयवविनाशयोश्चावयविनाशेनान्वयव्यतिरेकावन्यथासिद्धौ तद्गतपरिमाणनाशेन तु तद्द्वारेणैवान्यथासिद्धौ, अतो यद्यवयविनाशे तयोरकारणत्वं तर्हि परिमाणनाशे तयोः कारणशङ्काऽपि नास्तीत्यर्थः । **नष्टे द्व्यणुक इत्यादि** द्व्यणुकनाशोत्तरक्षणे श्यामादीनां विनाशः परमाणुगतश्यामादिविनाशे द्व्यणुकनाशस्य कारणत्वात् । श्यामादिविनाशोत्तरक्षणे रक्तादीनामुत्पादः परमाणुगतरक्ताद्युत्पादे श्यामादिवि-

नाशस्य कारणत्वात् । रक्ताद्युत्पादोत्तरक्षणे परमाणुकर्मोत्पत्तिः कर्मोत्पत्तौ स्पर्शस्य कारणत्वात् । व्युत्पादितं चैतद्यथावसरम् । शेषं सुगमम् ।

ननु द्व्यणुकादिविनाशादिभ्यः श्यामादिनिवृत्तिसमय एव परमाणोराकाशादिना विभागः परमाणुद्वयविभागेन द्व्यणुकविनाशविशिष्टं कालमपेक्ष्य परमाण्वाकाशविभागारम्भात् । तेन रक्ताद्युत्पत्तिक्षण एव विभागात् परमाणोः पूर्वाकाशदेशसंयोगनिवृत्तिः, रक्ताद्युत्पादनानन्तरक्षण एवोत्तरसंयोगः । न चोत्तरसंयोगक्षणे द्रव्यारम्भकक्रियान्तरं सम्भवति, कर्मवति कर्मानुदयात् । तेनोत्तरसंयोगानन्तरक्षणे द्रव्यारम्भककर्मेति दशक्षणप्राप्तौ कथं नवक्षणेऽसत आह—सेयमिति (पृ.१९०) । सेयं प्रक्रिया तदा यदा इति पक्ष इत्यन्वयः । यदा द्व्यणुकारम्भकसंयोगनाशमपेक्ष्य परमाणुद्वयविभागेन द्व्यणुकनाशक्षणे परमाण्वाकाशादिविभागो जन्यते तदेयं नवक्षणा प्रक्रियेत्यर्थः । विभागः परमाणुद्वयविभागः विभागजविभागः परमाण्वाकाशविभागः कर्म आद्यविभागोत्तरसंयोगहेतुक्रिया ततो द्रव्यारम्भणाय क्रियेति । तस्मिन्निसर्थे तेन यदैव पूर्वकर्मनिवृत्तिस्तदैव द्रव्यारम्भकं कर्मेत्यवधेयम् । अन्यथा एकादशक्षणापत्तौ दशमे क्षणे इति व्याकोपादिति । उत्तरसंयोगेति । यदा द्व्यणुकविनाशोत्तरक्षणे परमाणुद्वयविभागेन श्यामादिविनाशसमकालं परमाणोः पूर्वाकाशदेशविभागो जन्यते उत्तरक्षणे च परमाणुपूर्वाकाशविभागेन रक्ताद्युत्पत्तिः परमाणोः पूर्वाकाशदेशसंयोगो नश्यति तदा रक्ताद्युत्तरक्षणे पूर्वाकाशसंयोगविनाशसहितेन कर्मणा परमाणोरुत्तरसंयोगस्तेजसा जन्यते इति दशक्षणप्रक्रियासिद्धिरित्यर्थः । द्व्यणुकनाशश्यामादिनिवृत्त्यादयो युगपदेव किं न स्युरि-



त्यभिप्रायवान् पृच्छति—कथमिति । उत्तरमाह—द्रव्यविनाश इति । यदा त्वेकत्र द्व्यणुकविनाशिकाऽन्यत्र च द्व्यणुकान्तरोत्पादिकेति[पृ.१९१]उदाहरणमात्रम् । यदा च यैव पूर्वद्व्यणुकविनाशिका सैव च परमाण्वन्तरेण द्रव्यारम्भकसंयोगजनिका तदा यदि द्रव्यारम्भकसंयोगनिवृत्तिर्विभागस्य विभागजनकापेक्षणीया तर्हि द्व्यणुकविनाशमारभ्य पञ्चमे रूपाद्युत्पत्तेः । यदि तु द्रव्यविनाश एव विभागस्य विभागजनने अपेक्षणीयस्तर्हि द्व्यणुकविनाशमारभ्य षष्ठे क्षणे रूपाद्युत्पत्तिरित्यपि द्रष्टव्यम् । द्वित्रिचतुःक्षणेति । यदा परमाणुकर्मणा परमाण्वोर्विभागः तदैव परमाण्वन्तरे कर्म यदा च परमाण्वोर्द्व्यणुकोपाधिकसंयोगविनाशःतदैव परमाण्वन्तरस्य पूर्वदेशविभागः तत एकत्र क्रमेण द्व्यणुकनाशश्यामादिरक्ताद्युत्पादा अन्यत्र च पूर्वसंयोगनाशोत्तरसंयोगद्व्यणुकोत्पादाः चतुर्थे क्षणे गुणोत्पत्तिरिति चतुःक्षणा प्रक्रिया वक्तव्या, सा च न युक्ता । द्व्यणुकविनाशद्वितीये क्षणे श्यामादीनां विनाशात् रक्तानुत्पादात् परमाणौ रूपरसस्पर्शरहितत्वेन द्व्यणुकनाशतस्तृतीये क्षणे द्व्यणुकान्तरानारम्भकत्वात्स्पर्शादिरहितस्य चानारम्भकत्वं समवायिकारणस्पर्शस्यान्वयव्यतिरेकाभ्यां द्रव्यजनकत्वात् । अन्यथा मनोभ्यां द्रव्यारम्भापत्तेरिति, तदिदमाह—सगुणनैवेति । रूपस्पर्शादिमतेत्यर्थः । क्रियाविभागादिन्यायेनैकत्र क्रमेण द्व्यणुकनाशश्यामादिनाशौ परमाण्वन्तरे चोत्तरसंयोगद्व्यणुकोत्पादौ तृतीयक्षणे गुणोत्पत्तिरिति त्रिक्षणा प्रक्रिया वक्तव्या, सापि न । द्व्यणुकोत्पत्तिक्षणे श्यामादीनां विनाशात् रक्तादीनां चानुत्पादात् । परमाणौ रूपादिरहितत्वेन तदुत्तरक्षणे द्व्यणुके रूपाद्युत्पत्तेर्दुर्घटत्वा-

दिति, तदिदमाह—**सगुणेनेति** । कार्योत्पत्तिक्षणे रूपादिगुणवतेत्यर्थः । अन्यथा द्वितीयक्षणे कार्ये गुणानुपपत्तिरिति भावः । क्रियाविभागादिन्यायेन द्व्यणुकविनाशक्षणे परमाण्वन्तरक्रियादिना द्व्यणुकान्तरोत्पत्तिः द्वितीयक्षणे गुणोत्पत्तिरिति द्विक्षणा प्रक्रिया वक्तव्या । सापि न, द्व्यणुकोत्पत्तिक्षणे परमाणुगतश्यामादीनां विनश्यदवस्थेन द्वितीयक्षणे गुणोत्पत्तेरसंभवात्, विनश्यदवस्थस्यासमवायिकारणत्वानङ्गीकारात् । तदिदमाह—**सगुणेनेति** । कार्योत्पत्तिक्षणेऽविनश्यदवस्थरूपादिगुणवतेत्यर्थः । अन्यथा द्वितीयक्षणे गुणोत्पत्तेर्दुर्घटत्वादिति भावः । द्व्यणुकान्तरेऽपि प्राचीनश्यामादीनामेव रूपाद्यारम्भकत्वे रक्त दूयुत्पत्तिर्दुर्घटा, सा च विवक्षिता पक्वाभ्यामेव परमाणुभ्यां द्व्यणुकारम्भस्य वर्तमानत्वात् । पक्वापक्वाभ्यां पुनरारम्भं चैव वक्ष्यति । **एवमेवेति** । पाकजोत्पत्तिव्युत्पादनस्य प्रयोजनवत्तामुपसंहरति—**तदेवमिति** । सेयं पाकजोत्पत्तौ ऋजुमार्गेण ग्रन्थव्याख्या, तर्कप्रमाणचिन्ता तु प्रत्येकग्रन्थगोचरा पौर्वापर्यानुसन्धातृमनुष्याणां न दुर्लभा ।

**विषयतया हेतुरिति** । विशेषणतया हेतुरित्यर्थः । यो ह्येकादिसंप्रतिपन्नपदार्थव्यतिरिक्तसंख्यायां न प्रमाणमित्याह तस्य किमेकादिज्ञानं निर्विषयमिष्टम्, अत्यन्तासदेकादिविषयं वा, संप्रतिपन्नघटादिप्रमा वा, घटाद्यारोपो वा? आद्यं निराचष्टे—**न ह्येकादीति** । **व्याघातादिति** । एकादिविषयज्ञानमेकादिज्ञानं, तेन एकादिविषयं ज्ञानं निर्विषयं चेति व्याहतमित्यर्थः । नापि द्वितीय इत्याह—**नाप्यलीकेति** । अलीकत्वमत्यन्तासत्त्वं, तच्च बाधकगम्यमबाधितेऽङ्गीक्रियमाणम् । अभ्यु-



पगमविरोधं सौगतानामापादयतीति तात्पर्यम् । तृतीये दूषणमाह—**नापीत्यादिना पटेऽपि भावादित्यन्तेन** । पटेऽपि भावादित्यस्यानन्तरं 'नापि रूपादिनिबन्धनं परैरेवानङ्गीकारात्' इति पूरणीयम् । घटादिस्वरूपं निबन्धनं विशेषणत्वेन विषयोऽस्य तद् घटस्वरूपनिबन्धनम् । 'घटान्तरे भावात्' इत्येकं दूषणम् । अपिशब्दात्तस्यैव तद्विशेषणत्वानुपपत्तिरित्यपरम् । तत्र प्रथममनुपपन्नमेव । तथाहि—अयमेको घट इति ज्ञानं नैतद्घटनिबन्धनमिति प्रयोगे व्याघातादासिद्धेश्च । न ह्येतदेव घटान्तरविषयम् । घटान्तरे जायमानमेको घट इति ज्ञानं नैतद्घटविषयमिति साधने सिद्धसाधनत्वात् एतद्घटान्तरादिविशिष्टकालादिग्राहकयोगिज्ञानादिना व्यभिचाराच्च । तस्मादेको घट इत्येतद्घटविशेषणमेकस्माद्भिन्नम् एतद्विशेषणत्वात्संप्रतिपन्नवदित्यनुमानम् । एको घट इति विशेषणविशेष्यभेदग्राहकं प्रत्यक्षं च घटसंख्ययोर्भेदे प्रमाणमित्येवात्र न्यायः । 'नापि घटत्वनिबन्धनं पटेऽपि भावात्' इत्यपि प्राचीननयनिरस्तम् । पटेऽपीत्यपिशब्दसमुच्चितमेव घटत्वैकत्वयोर्भेदबोधकं वक्तव्यं, तच्च घटत्वमेकत्वाद्भिद्यते अनेकाश्रितत्वात्पटत्ववदित्यादि । एतेन द्रव्यत्वमेवैकत्वमित्याद्यपि निरस्तम् । चतुर्थं सोपपत्तिकमाशङ्क्य निराचष्टे—**न चाऽरजतेऽपीति** । **अभ्रान्तत्वादिति** । अबाधितत्वादित्यर्थः । यथाश्रुतस्य साध्यविशिष्टत्वात् । एवमेकादिज्ञानस्य घटाद्यविषयत्वे सति प्रमात्वं प्रसाध्य घटादिव्यतिरिक्तविषयत्वे प्रयोगमाह—**सोऽयं घटादाविति** । स च यथाश्रुतोऽनुपपन्न एव घटत्वव्यतिरिक्तविषयत्वसाधने घटावयवघटनिष्ठधर्मैरर्थान्तरत्वात् । घटघटत्वाद्यतिरिक्तविषयत्वे तु साध्यघटादिशब्देन संख्याव्यतिरिक्तसक-

लवस्तुपरिग्रहः, तदाऽप्रसिद्धविशेषणत्वम् । अथ घटतद्वय-वतद्धर्मसंप्रतिपन्नघटधर्मतद्धर्मादिपरिग्रहः, तथापि संख्यानिष्ठधर्मैरर्थान्तरम् । तद्धर्ममात्रपरिग्राहकत्वेनैवास्य साध्यस्य चरितार्थत्वे संख्याग्राहकत्वस्यासिद्धेः । किं चैको घट इति प्रत्ययस्य धर्मित्वे 'पटादावपि जायमानत्वात्' इत्यसिद्धो हेतुः । 'एकः पटः' इत्यादिप्रत्ययस्य धर्मित्वे घटघटत्वादिव्यतिरिक्तपटादेर्ग्राहकत्वेन सिद्धसाधनं, बहुदोषग्रस्तं चैतत् । तस्माद्घटघटत्वादिशब्दः संप्रतिपन्नैतत्प्रत्ययविषयोपलक्षकः, हेतुश्च प्रत्ययत्वोपलक्षकः । तेनैको घट इति प्रत्ययः संप्रतिपन्नैतद्विषयातिरिक्तजातिमत्प्रमा प्रमात्वात् घटप्रमावदिति प्रयोगः कर्तव्यः । न च संख्याधर्मिभिरर्थान्तरता, संख्याधर्मस्य जातेरभावस्य वा जातिमत्पदेनैव व्यवच्छिन्नत्वात् तद्विषयव्यतिरिक्तप्रमात्वसिद्धेर्दुर्वारत्वादिति । भवतु प्रमा, मा वा भूत्, संप्रतिपन्नैतद्विषयातिरिक्तजातिमत्प्रमात्वाभावशङ्कावादिनः किं प्रमात्वेऽपि संप्रतिपन्नैतद्विषयातिरिक्तजातिमद्विषयत्वाभावो विवक्षितः किं वा संप्रतिपन्नैतद्विषयाऽतिरिक्तजातिमद्विषयत्वेऽप्यारोपोऽयमिति विवक्षितम् ? प्रथमं दूषयति—नहि तद्व्यतिरेकेणेति । तद्व्यतिरेकेण भवतीति प्रत्ययत्वोपलक्षकम् । तद्विषयश्चेति संप्रतिपन्नैतद्विषयातिरिक्तजातिमद्विषयत्वाभावोपलक्षकम् । तेन प्रमात्वसंप्रतिपन्नैतद्विषयातिरिक्तजातिमत्प्रमात्वाभावयोः शीतोष्णस्पर्शयोरिव परस्परपरिहारेणैव निर्णीतत्वादेकत्वाङ्गीकारे व्याहतिरित्यर्थः । द्वितीयं दूषयति—न हीति । तत्प्रत्ययनिमित्तमन्तरेणेति । एकादिप्रत्ययनिमित्ततयाऽङ्गीकृतघटादिकमन्तरेण पटादौ भवतीतिवदतोऽयमारोप इति विवक्षितम् । तेनारोपो भ्रान्तश्चेति एको व्या-



घातः, दोषजन्योऽभ्रमश्चेति द्वितीय इति विवक्षितं, न त्वाकस्मिकत्वं नाम किञ्चिदापाद्यं प्रमितं तद्व्याप्यं वा किञ्चिदापाद्यमिति; येन यथाश्रुतस्तर्कोऽवकाशमासादयेदिति । एकादिप्रत्ययस्य घटपटसाधारणत्वादित्यादि प्रागेव दूषितम् । न हि य एव घटे एकप्रत्ययः स एव पटे इति केनचिदभ्युपगतम् । केचिद् घटपटसाधारणत्वादिति घटपटसाधारणवस्तुग्राहकत्वादिति व्याख्याय एकत्वं घटाद्भिद्यते घटपटसाधारणत्वादिति प्रयुञ्जते, तदसत् । घटाद्येकत्वस्य घटाद्येकैकनिष्ठत्वेन साधारणत्वस्यासिद्धेः । एको घट एकः पट इत्यनुगतप्रत्ययबलेनानुगतं वस्तु प्रसाध्य तद् घटादेर्भिद्यत इति साधनेऽप्यर्थान्तरम् । एकत्वादेर्घटादिभेदसिद्धेः । [पृ.१९३] एवं स्वरूपभेद इति । परस्परभिद्यमानो घटादिरित्यर्थः । तदा त्र्यादिष्वपीति । त्र्यादिप्रत्ययेष्वपीत्यर्थः । द्विप्रत्ययः स्यादिति । द्वित्वप्रत्ययः स्यादित्यर्थः । तदनेन यदि परस्य भिद्यमानघटादिकमेव द्वित्वं तर्हि परस्परभिद्यमानघटादिप्रत्ययत्वमेव द्वित्वप्रत्ययत्वमिति त्रयो घटा इत्यादिप्रत्ययेऽपि परस्परभिद्यमानघटादिविषये द्वित्वप्रत्ययत्वमनभ्युपगम्यमानमभ्युपगमविरोधमापादयतीति दर्शितम् । यथाश्रुतस्तु तर्कोऽनुपपन्न एव । न हि परस्परभिद्यमानघटादेर्द्वित्वात्मकता त्र्यादिष्वपि द्वित्वप्रत्ययविषयत्वेन व्याप्ता, येनेदमापादयेत् । न च त्र्यादिष्वपि द्विप्रत्ययः परस्यानिष्टः, यथाभूते त्रिप्रत्ययस्तथाभूते द्वित्वप्रत्ययप्रसङ्ग इत्यादि तु निरर्थकम् । घटपटादावेव वा स्वरूपभेद इत्यपि न युक्तम् । अत्र किं घटादौ यो द्वित्वप्रत्ययः स पटादौ न स्यादिति विवक्षितं किं वा यदि घटादौ स्वरूपभेदो द्वित्वं तर्हि द्विप्रत्ययः पटादौ न स्यादिति ? आद्ये इष्टापादनविपर्ययपर्यव-

साने । द्वितीये मूलशैथिल्यम् । न हि घटादिस्वरूपभेदस्य द्वित्वात्मत्वादि पटादौ "द्वौ पटौ" इत्यादिप्रत्ययाविषयत्वेन व्याप्तम् । तस्माद् घटद्वित्वं घटाद् भिद्यते द्वित्वात्मत्वात् पटद्वित्ववदित्यादिकमेव ज्यायः ।

तदेवमुक्तप्रकारेणैकत्वादिसाक्षात्कारो घटादिव्यतिरिक्तजातिमत्प्रमात्वेन साधितः । तत्साधकमेवानुमानं वा संख्यायां प्रमाणमित्येवंपरत्वेन "एकादिव्यवहारहेतुः संख्या" इति भाष्यं व्याख्याय तर्कपरतया व्याचष्टे—**अथ वेति** । **यदि संख्येति** । घटादभिन्नत्वं घटनिश्चयदशायामसंदिग्धत्वेन व्याप्तं घटे दृष्टम् । तेन यदि संख्यैतद्घटस्वरूपमेव तर्ह्येतद्घटनिश्चयदशायां नैतद्घटनिश्चयवतः संदेहविषयः स्यादिति । तर्कविपर्ययस्तु इयं संख्या एतस्माद्भिद्यते मदीयैतन्निश्चयदशायां मन्निष्ठसंदेहविषयत्वात्पदार्थान्तरवदिति । एवमन्यदपि यथाकथञ्चिदाचार्यश्रद्धया समर्थनीयम् । असमुच्चयशब्देन यदि घटादिनिष्ठो धर्मविशेषो विवक्षितस्तदा विवाद इत्याह—**एकत्वस्यैवेति** । अथ समुच्चयशब्देन भिन्नविषयिण्येका बुद्धिरुक्ता, तत्राप्याह—**भिन्नानामिति** ।

**क्वचित्तात्त्विकीमिति** । द्वित्वादिप्रागभावरूपप्रतिनियतसहकारिबलादपेक्षाबुद्धिः प्रतिनियतं द्वित्वादिकमुत्पादयति । तेन तात्त्विकीमभावप्रतियोगित्वेन संख्यामुपादाय द्वित्वादेरुत्पादनियमः, भाक्तीं संख्यामादाय रूपादौ चतुर्विंशतिरेवेत्यादिनियम इत्यर्थः । [पृ.१९४]**लाघवायेति** । यस्य द्वित्वादिकं गुणः, तेन द्वित्वव्यक्तीनां व्यावृत्तत्वात् "द्वौ द्वौ" इत्यनुगतव्यवहारसिद्धये तास्वनुगतं सामान्यान्तरं कल्पनीयम् । द्वित्वं सामान्यमिति त्वेतदतिरिक्तं न किञ्चिदपि कल्पनीयमिति



लाघवम् । एकत्वद्वित्वादयः परस्परव्यक्तिपरिहारवन्तो न वा ? आद्ये जातित्वं न घटत इत्याह—**न विरोधादिति** । परस्परपरिहारवतोरेकत्र समावेशो न युक्त इत्यर्थः । द्वितीयेऽपि किं न्यूनाधिकव्यक्तिवृत्तयस्तुल्यव्यक्तिवृत्तयो वा? नाद्य इत्याह—**परस्परभावाभावाच्चेति** । द्वितीये दूषणमाह—**अन्यूनानतिरिक्तेति** । **विरुद्धधर्माध्यासो हि तदिति** । अत्र न चासावन्यूनानतिरिक्तव्यक्तिवृत्तित्वे संभवतीति शेषः । जातेर्हि व्यक्तिविशेष एव जात्यन्तराद्व्यावर्तको धर्मः, समवेतधर्मान्तराभावात्; न चासौ तुल्यव्यक्तित्वे सम्भवतीति भावः । ननु मा भूद्विरुद्धधर्माध्यासो भेदप्रमाणं, द्वे त्रीणीत्यादिलक्षणप्रत्ययास्तु भविष्यन्तीति शङ्कते-**प्रत्ययवैलक्षण्यमिति** । समाधत्ते-**न धर्मविरोधमिति** । विलक्षणप्रत्ययो हि व्यावृत्तप्रत्ययः, स च व्यावर्तकधर्मजन्यः । न च जातित्वपक्षे द्वित्वादौ समवेतो व्यावर्तकधर्मः सम्भवति, जातौ तदनङ्गीकारात् । नापि व्यक्तिविशेषो व्यावर्तकः, तुल्यव्यक्तित्वात् । तज्जातित्वपक्षे द्वित्वैकत्वादौ व्यावर्तकधर्मानुपपत्तेः व्यावृत्तप्रत्यय एव दुर्घट इति कथं भेदे प्रमाणं स्यादिति । अस्ति तावद्व्यावृत्तप्रत्यय इति चेत् । सत्यम्, अत एव व्यावर्तको धर्मः स्वीकरणीयः । स च व्यक्तिविशेषलक्षणो न घटत इति द्वित्वादिसमवेतोऽङ्गीकरणीयः । न च जातौ धर्मो घटत इति द्वित्वादेरजातित्वसिद्धिरिति । **अन्यथेति** । अन्यूनानतिरिक्तव्यक्तिवृत्तिजातिद्वयपक्ष इत्यर्थः । घटत्वकलशत्वादेरापत्तौ घटकलशबुद्ध्योः शब्दयोश्च पौनरुक्त्यं न स्यादित्यर्थः ।

**गणितव्यवहारहेतुरिति** । गणितव्यवहाराविषय इत्यर्थः । तेन नेश्वरज्ञानादिनाऽतिव्याप्तिः । कारणगुणपूर्वकं द्वित्वं न

त्वपेक्षाबुद्धिजन्यमिति पक्षे ऽयमेकोऽयमेक इति बुद्धिं विना द्वित्वोपलब्धिः स्यादत आह–[पृ.१९५]अपेक्षाबुद्ध्येति । एकद्रव्यं प्रसज्येतेति । अत्र कारणगुणानामेकपर्यवसितहेतुत्वावधारणादिति शेषः । युक्त्यन्तरमाह–त्रित्वादिकं चेति । यदि द्व्यणुकगते द्वित्वे परमाणुगतमेकत्वद्वयं जनकं तर्हि तावन्मात्रस्य द्वित्वात्मक एव कार्ये क्लृप्तशक्तित्वात् त्रित्वोत्पत्त्यर्थमेकत्वान्तरमादरणीयं,न च तत्परमाणुद्वये सम्भवतीति द्व्यणुके त्रित्वं न जायेतेत्यर्थः।(पृ.१९६)तद्वदेवेति ।कारणाकारणगुणासमवायिकारणके अकारणमेव समवायिकारणतयात्क्लृप्तम् । तेन संयोगवत्संख्या न कारणमाश्रयेदित्यर्थः । ननु यान्येव परमाण्वेकत्वानि द्व्यणुकगतैकत्वजनकानि तान्येव कारणगुणपूर्वत्वपक्षे द्व्यणुकादौ द्वित्वाद्यारम्भकारणानीति नासमवायिकारणभेदः तथाप्येकत्वे द्व्यणुकमेव समवायिकारणं द्वित्वादौ परमाणवोऽपीति समवायिकारणभेदादेकत्वद्वित्वादेर्भेदो भविष्यतीति शङ्कते—कार्यमपेक्ष्येति । कार्येति । एकत्वसमवायिकारणद्व्यणुकमपि तावत् द्वित्वस्य समवायिकारणं, तेन यद्यपि द्वित्वे समवायिकारणान्तरमस्ति तथाप्येकत्वहेतूनां सर्वेषामपि द्वित्वे सत्त्वात् द्वित्वमेकत्वात्मकं स्यादित्यर्थः। एकत्वद्वित्वप्रागभावावेकत्वद्वित्वयोर्व्यावृत्तौ हेतू भवतामिवास्माकमपीत्यनाशङ्कनीयमेव । कारणगुणपूर्वकार्यवैषम्ये प्रागभावातिरिक्तहेतुवैषम्यस्यैव अन्वयव्यतिरेकाभ्यामुपयोगावधारणात् । अकारणगुणपूर्वकस्यापि शब्दादेः प्रागभावादिहेतुव्यतिरिक्तहेतुत्वावधारणात् । भवत्पक्षे द्वित्वादौ का गतिरिति चेत् । न, पाकजादिभिर्व्यभिचारात् । अपेक्षणीयान्तराभावादिति । अत्रास्माकं तु लिङ्गजाऽपेक्षाबुद्धिरपक्षीकरणेति न द्वित्वादेः



सततोत्पत्तिः, नाप्यविनाशप्रसङ्गः अपेक्षाबुद्धेर्नाशस्यैव नाशकत्वादित्यभिसंहितम् । द्वित्वद्विपृथक्त्वादेश्चेति । प्रतिनियतत्वव्यवस्थापकव्यङ्ग्यद्रव्यत्वघटत्वव्यवच्छेदार्थं समानदेशत्वग्रहणम् । द्रव्यत्वघटत्वादेर्न्यूनाधिकव्यक्तितया समानदेशत्वाभावात् । समानदेशत्वे सति समानेन्द्रियग्राह्ययोरपि शुक्लकृष्णयोर्मन्दालोकप्रतिनियतव्यञ्जकव्यङ्ग्यत्वमास्थेयम् । अन्यथा मन्दान्धकारेऽपि शुक्लोपलम्भेऽपि कृष्णरूपानुपलम्भानुपपत्तेः । ततः समानधर्मत्वे सतीति विशेषणान्तरमुपादेयमिति चेत् । न, शुक्लकृष्णयो रूपयोर्भिन्नद्रव्यवर्तितया समानदेशत्वस्यैवाभावात् । प्रतिनियतचक्षुरादिव्यङ्ग्यरूपरसादिव्यवच्छेदार्थं समानेन्द्रियग्राह्यपदम् । रूपसंख्यापरिमाणादयश्चात्रोदाहरणम् । उपाधिविरहाच्च व्याप्तिसिद्धिरित्याद्यनुसन्धेयम् । नियामिका चेति । द्वित्वादेः प्रतिपुरुषवैद्यत्वनियमनिर्वाहिकेत्यर्थः ।

तदेतदिति । अपेक्षाबुद्धेरुत्पादकत्वं तद्विनाशस्य च विनाशकत्वमित्यर्थः । तदेतद् त्रिंशदयति इत्यन्वयः । बुद्धिमात्र इति । एकत्वविषये बुद्धिमात्र इत्यर्थः । न्यायप्राप्तामिति । उक्तो न्यायः । शिष्यजिज्ञासामनूद्येति । जिज्ञासाविष्करणं प्रश्नः । तेन प्रश्नपूर्वमित्यर्थः । इदं च 'कथम्'इत्यारभ्य 'एतेन त्रित्वाद्युत्पत्तिर्व्याख्याता'इत्यन्तस्य भाष्यस्यावतारणम् । यदा बुद्धिरुत्पद्यते तदा द्वित्वमारभ्यत इति न युक्तम् । कार्यकारणयोः पौर्वापर्यनियमादित्याशङ्क्योत्पद्यत इत्यन्यथा व्याचष्टे–(पृ० १९७) उत्पन्ना भवतीति । अस्यैव विवरणं 'द्वित्वारम्भाय व्याप्रियते' इत्यादि । अपेक्षाबुद्धेर्द्वित्वोत्पत्तिमभिधाय तद्विनाशाद् द्वित्वविनाशो वक्तव्यः, प्रस्तुतत्वात् । द्वे द्रव्ये इति ज्ञानव्युत्पादनं त्वप्रस्तुतत्वादयुक्तम् इति शङ्कां

परिहरन्नुक्तभाष्यमवतारयति–द्वित्वस्येति । द्वित्वसामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्तेति हेतोः पञ्चमी न युक्ता । अपेक्षाबुद्धिविनश्यत्ताया द्वित्वसामान्यज्ञानादव्यतिरिक्तत्वेन द्वित्वसामान्यज्ञानस्य तत्र हेतुत्वानुपपत्तेरित्याशङ्कां परिहरति–(पृ० १९८) यद्यपि सामान्यज्ञानमेवेति । तस्य हेतुत्वमाविष्कर्तुमिति । द्वित्वसामान्यज्ञानस्य विनश्यत्ताविशेषणीभूतं विनाशं हेतुत्वमाविष्कर्तुमित्यर्थः ॥ [पृ० २००] द्रव्यज्ञानेऽनुव्यवसाय इति । द्वे द्रव्ये जानामीति ज्ञानविषयज्ञानमपेक्षाबुद्धिरिति द्वित्वोत्पादकत्वानुत्पादकत्वाभ्यां विप्रतिपन्ना बुद्धिर्विवक्षिता । तेन त्रित्वादिजनकापेक्षाबुद्धीनां धर्मित्वेनानुपादानादंशे द्वित्वजनकत्वं बाधितमिति निरस्तम् । तेनानुविधीयमानत्वादिति । नियमेन द्वित्वपूर्वक्षणवर्तित्वादित्यर्थः । ननु यावदाश्रयभावि द्वित्वम्, अपेक्षाबुद्धिस्तु द्वित्वोत्पत्त्यनन्तरमुत्पन्ना द्वित्वव्यञ्जिका, तेन द्वित्वपूर्वक्षणवर्तित्वमपेक्षाबुद्धेरसिद्धमित्याशङ्क्योक्तं–व्यञ्जकत्वानुपपत्ताविति । अपेक्षाबुद्धेर्व्यञ्जकत्वे पूर्वमेव निषिद्धे अपेक्षाबुद्धिद्वितीयक्षणात् पूर्वं सत्यप्याश्रये योग्यानुपलब्धिसहितप्रत्यक्षेण द्वित्वाभावनिर्णयादपेक्षाबुद्धेर्द्वित्वपूर्वक्षणवर्तित्वासिद्धिरिति भावः । ये तु व्यञ्जकत्वानुपपत्ताविति हेतुविशेषणमाहुः, तेषां व्यर्थविशेषणत्वम् । अथ तेनानुविधीयमानत्वादिति नियमेन द्वित्वोपलब्धिपूर्वक्षणवर्तित्वादिति विवक्षितं, तेनाऽऽत्ममनःसंनिकर्षादिना व्यभिचारपरिहारार्थं व्यञ्जकत्वानुपपत्ताविति विशेषणमित्युच्यते, तदप्यसत् । उपलब्धिपदार्थव्यञ्जकत्वानुपपत्तिपदार्थयोः समुदितयोर्वैयर्थ्यात् नियमेन द्वित्वपूर्वक्षणवर्तित्वस्य व्यभिचाराभावादिति । शब्दं प्रति संयोगविभागवदिति । अत्र शब्दं प्रतीति व्यर्थं संयोगविभागवदिति वैकल्पिकं वैधर्म्यदृष्टान्तद्वयं,



साधर्म्यदृष्टान्तत्वे साध्यसाधनविकलत्वात्, संयोगविभागयोर्द्वित्वाजनकत्वात् नियमेन द्वित्वपूर्वक्षणवर्तित्वरहितत्वाच्च । साधर्म्यदृष्टान्तस्तु द्वित्वजनको घटादिर्द्रष्टव्य इति । नन्वस्तु पूर्वोत्तरकर्मविषयाणां बुद्धीनां विषयभेदाद्भेदः, अस्तु च स्थिरविषयबुद्धीनां निमेषोन्मेषसन्ततौ भेदः, निमेषदशायां 'न पश्यामि' उन्मेषदशायां च 'पश्यामि' इति प्रतीतेः । यत्र तून्मिषितं चक्षुरेव घटादिकं स्थिरमुपलभते तत्र कथमाशुतरविनाशोत्पादित्वं बुद्धेरत आह—तथाचेति । स्थिरविषया इति । अत्रोन्मीलितचक्षुषोऽपीति शेषः । सन्तानवर्तिन्य इति । आशुतरविनाशिन्य इति । विवक्षितं न त्वव्यवहितपूर्वोत्तरभावेन जायन्ते इति, एकयैव व्यवधाननिवर्तनीयया व्यभिचारात् । व्यवधाननिवर्तनीयत्वादिति (पृ. २०१) । यथाश्रुतं न युक्तम् । बुद्धेर्बुद्ध्यन्तरविनाश्यत्वपक्षे व्यवधानस्याविनाशकत्वात् । व्यवधानादिन्द्रियसन्निकर्षनाशः, ततो बुद्धिविनाश इति परम्परया व्यवधानस्य बुद्धिनिवर्तकत्वमित्यपि न बुद्धेर्बुद्धिविनाश्यत्वपक्षे इन्द्रियसंनिकर्षनाशानाश्यत्वात् प्रदीपप्रभारम्भकसंयोगनाशाश्रयनाशनिवर्तनीया न व्यवधाननिवर्तनीयेति साधनविकलो दृष्टान्तः । न चाकारप्रश्लेषेणाव्यवधाननिवर्तनीयत्वादिति हेतुवर्णनं युक्तम् । अव्यवधाननिवर्तनीयत्वं यथाश्रुतमविनाश्यत्वं तदा साध्यविशिष्टता, अन्यथाऽन्यत्तदाऽशक्यनिर्वचनं क्लिष्टं चेति । तस्माद् बुद्धित्वात् विद्युद्बुद्धिवदिति हेतुदृष्टान्तौ लक्षणया वर्णनीयौ । ननु यथा प्रथममपेक्षाबुद्धेर्द्वित्वजनकत्वमेवं द्वित्वोत्पत्त्यनन्तरं द्वित्वव्यञ्जकत्वम् । तेन व्यञ्जकाभावादपि द्वित्वानुपलब्धिर्घटमाना न सत्येवाश्रये द्वित्वाभावसाधिकेति कथमाशुतरविनाश्यत्वं द्वित्वस्येत्यत आह—अभिव्यञ्जकत्व इ-

ति । **द्वित्वमिति** । घटपटयोः सतोरेव निवर्तमानं घटपटद्वित्वमित्यर्थः । तेन घटपटविनाशविनाश्यद्वित्वस्य धर्मित्वेनानुपादानादंशे निमित्तविनाशविनाश्यत्वं बाधितमिति निरस्तम् । **निमित्तविनाशविनाश्यमिति** । एतद्घटपटद्वित्वजनकापेक्षाबुद्धिविनाशविनाश्यमिति विवक्षितम् । तेन द्वित्वजनकादृष्टविनाशविनाश्यत्वेनार्थान्तरमिति निरस्तम् । **आश्रयेति** । प्रकृतद्वित्वाश्रयौ घटपटौ विवक्षितौ । **विरोधिगुणेनेति** । घटपटगुणौ विवक्षितौ । **गुणस्य सत इति** । घटपटगुणस्य सत इति विवक्षितम् । **विनाशित्वादिति** । अत्र न विनाशी अविनाशीति विग्रहगतविनाशिपदेन विनाशिविशेषावनेकपृथक्त्वबहुत्वसंख्ये विवक्षिते । तेनात्राविनाशित्वमनेकपृथक्त्वबहुत्वातिरिक्तत्वमभिप्रेतम् । तस्माद् घटविनाशाविनाश्यपटविनाशाविनाश्यघटगुणाविनाश्यपटगुणाविनाश्यानेकपृथक्त्वबहुत्वातिरिक्तघटपटगुणत्वादिति हेत्वर्थः । अत्र च घटविनाशविनाश्यघटपटसंयोगादिनिवृत्त्यर्थं घटविनाशाविनाश्यग्रहणम् । पटाविनाशाविनाश्यघटपटसंयोगादिनिवृत्त्यर्थं पटाविनाशाविनाश्यग्रहणम् । घटोत्तरदेशसंयोगविनाश्यघटपटविभागनिवृत्त्यर्थं घटगुणाविनाश्यग्रहणम् । पटोत्तरदेशसंयोगविनाश्यघटपटविभागनिवृत्त्यर्थं पटगुणाविनाश्यग्रहणम् । अनेकपृथक्त्वबहुत्वनिवृत्त्यर्थमनेकपृथक्त्वबहुत्वव्यतिरिक्तग्रहणम् । घटाकाशादिद्वित्वनिवृत्त्यर्थं पटग्रहणम् । पटाकाशादिनिवृत्त्यर्थं घटग्रहणम् । एषां सर्वेषामपि प्रकृतद्वित्वजनकापेक्षाबुद्धिविनाशाविनाश्यत्वेन विपक्षत्वादिति । एवं च चरमज्ञानवदिति अन्वयदृष्टान्तोऽनुपपन्न एवेति मन्वानः पूर्वत्राऽपरितोषाद् वैधर्म्यदृष्टान्तमाह—**व्यतिरेकेणेति** । तस्मादेवं प्रयोगः—सतोरेव घटपटयोर्निवर्तमानं घटपट-



द्वित्वमेतज्जनकापेक्षाबुद्धिविनाशविनाश्यं घटविनाशाविनाश्यपटविनाशाविनाश्यघटगुणाविनाश्यपटगुणाविनाश्यानेकपृथक्त्वबहुत्वातिरिक्तघटपटगुणत्वात् न यदेवं न तदेवं, यथा द्व्यणुकमित्यादि । न चैतद्द्वित्वजनकापेक्षाबुद्धिविनाशविनाश्याप्रसिद्धेरप्रसिद्धविशेषणता । एतद्द्वित्वजनकापेक्षाबुद्धिविनाशः किञ्चिद्विनाशकत्वातिरिक्तैतद्धर्मत्वरहिताधिकरणं मेयत्वात् घटवदिति विशेषणप्रसिद्धेः । यथाश्रुतं तु 'द्वित्वं निमित्तविनाशविनाश्यमाश्रयविनाशविरोधिगुणप्रादुर्भावाभावे गुणस्य सतो विनाशित्वाच्चरमज्ञानवत्' इत्यनुमानमनुपपन्नमेव । आश्रयविनाशैकविनाश्यद्वित्वांशे बाधाद् द्वित्वजनकादृष्टविनाशविनाश्यत्वेनार्थान्तरत्वाच्च आश्रयविनाशाभाव इति हेतुविशेषणाऽसिद्धेश्च यत्किञ्चिदाश्रयविनाशस्य द्वित्वविनाशपूर्वक्षणे सत्त्वात् । आश्रयाविनाशविनाश्यत्वाभावो विशेषणत्वेन विवक्षित इति चेत् । न, द्वित्वस्य गुणत्वाश्रयापेक्षाबुद्धिविनाशविनाश्यत्वेन तस्याप्यसिद्धेः । द्वित्वाश्रयविनाशविनाश्यत्वाभावो विशेषणमिति चेत् । न, चरमज्ञानस्य किञ्चिद्द्वित्वाश्रयशरीरविनाशविनाश्यत्वेन तद्राहित्यानुपपत्तेर्दृष्टान्तस्य साधनविकलत्वात् । घटपटद्वित्वं पक्षः, तदाश्रयघटपटविनाशविनाश्यत्वाभावो हेतुविशेषणमिति चेत् । न, घटपटविनाशविनाश्यत्वरहितविरोधिगुणविनाश्यत्वरहितगुणत्वे सति विनाशित्वरूपसाधनस्य निमित्तविनाशविनाश्यत्वरूपसाध्यरहितेऽपि स्तम्भरूपादौ विद्यमानत्वेनानैकान्तिकत्वात् । एवं विरोधिगुणविनाश्यत्वरहितत्वं विशेषणमप्यसिद्धम् । ईश्वरज्ञानादिना विरोधिगुणेन द्वित्वविनाशात् । द्वित्वसमानाश्रयविरोधिगुणविनाश्यत्वरहितत्वं विशेषणमिति चेत् । न, ईश्वरज्ञानादेरपीश्वरनिष्ठद्वित्वसमानाश्रयत्वेन विशेषणासिद्धेस्तदवस्थत्वात् ।

घटपटद्वित्वं पक्षः, घटपटद्वित्वसमानाश्रयविरोधिगुणविनाश्यत्वाभावो विशेषणमिति चेत् । न, आश्रयविनाशविनाश्यत्वरहितघटपटद्वित्वसमानाश्रयविरोधिगुणविनाश्यत्वरहितगुणत्वे सति विनाश्यत्वरूपसाधनस्य निमित्तविनाशविनाश्यत्वरूपसाध्यरहितपार्थिवपरमाणुरूपादिनिष्ठत्वेनानैकान्तिकत्वात् । निमित्तविनाशविनाश्यत्वे च साध्ये संख्यात्वाभाव उपाधिः, साध्यव्यावृत्ते सति साधनाव्यावृत्तत्वात् । पक्षतुल्यव्यतिरिक्तस्यैकत्वादेर्व्यावर्त्यस्य सत्त्वात् न पक्षेतरता । द्वित्वं न निमित्तविनाशविनाश्यं संख्यात्वादेकत्ववदिति सत्प्रतिपक्षत्वं च द्रष्टव्यम् । तस्मादस्मदुक्तरीत्यैवेदमनुमानं समर्थनीयम् । एवमन्यान्यप्यनुमानानि ऋजुरीत्या प्रवर्तमानानि यथाश्रुतानि दूषणीयानि, वक्ररीत्या च समर्थनीयानि । कथं पुनरिति । द्रव्यज्ञानकाले विशेषणस्य द्वित्वस्यासत्त्वाद्विशिष्टज्ञानहेतुत्वं न घटत इति विवक्षितम् । न केवलं हेत्वभावाद् द्वे द्रव्ये इति ज्ञानानुपपत्तिः, किन्तु विषयाभावादपीत्याह—को वाऽस्येति । विषय इति । अत्र 'विशेषणस्यासत्त्वाद् विशेषणविशेष्ययोर्विषयत्वानुपपत्तेः' इति शेषः । न तु विषय इति । अत्र विशेष्यालम्बनत्वादिति शेषः । तदात्मीभावो वास्तव आरोपितो वा? प्रथमं दूषयति—नासंभवादिति । द्वितीयं दूषयति—विशिष्टज्ञानस्येति । विरोधायेति (पृ.२०२) । भेदस्तादात्म्याभावोऽभेदस्तादात्म्यम् । तयोरेकत्र समावेशे भावाभावयोर्विरोध उच्छिन्न इति धर्मधर्मिणोर्भेदाभेदपक्षवत् अभेद एव भेद एवेत्यपि पक्षौ स्यातामित्यर्थः । भेदाभेदवति भेद एवेति अभेद एवेति वा नियमो नापादयितुं शक्यते व्याहतेरिति शङ्कते—नियम इति । भेदाभेदलक्षणनियमवति भेद एवेत्यादिनियमापादने व्याहतिमभिधत्से तर्हि व्याह-



तिहेतुं नियमानियमयोर्विरोधमङ्गीकुरु । अन्यथा हेत्वभावे व्याहतिरेव । व्याहतिरिति सोल्लुण्ठमाह—नूनमनियमेति । भेदाभेदपक्षवत् भेद एवाभेद एवेत्यपि पक्षौ स्यातामितीष्टापादनत्वात् प्रसङ्गाभाव इति शङ्कते—सर्वे पक्षा इति । विरोधानङ्गीकारे विरुद्धधर्माध्यासस्य भेदज्ञापकस्याभावादद्वैतापत्तिः । तथा च सर्वे पक्षाः सन्त्विति वाक्यमेव न स्यात्ततो भिन्नस्य परस्परभिन्नोष्ठपुटस्पन्दादेस्तन्निदानस्याभावात् । पक्षाणां च भेदानुपपत्तौ सर्वपदोपादानानुपपत्तेश्चेति परिहरति—न विरोध इति । स्वतोऽभिन्नस्य प्रमाणस्याभावात् । तस्यैव तत्र प्रमाणत्वापत्तेश्चैकतानुपपत्तिरित्याह—एकता चेति । समानाधिकरणामिति । अत्र व्यवच्छित्त्येति शेषः । तेन व्यवच्छित्तिव्यधिकरणस्योपलक्षणस्य संज्ञादेर्व्यवच्छेदः । अवच्छेदकामिति । ज्ञातमवच्छित्तिप्रत्यायकमित्यर्थः । तेन नीलरूपरहितपदार्थव्यावृत्तिसमानाधिकरणस्यापि नीलरूपरहितपदार्थतादात्म्याभावलक्षणां व्यवच्छित्तिं सत्तया प्रत्याययत उत्पलनीलगुणसमवायादेरुत्पलेन्द्रियसंनिकर्षादेश्चाप्रत्याययतश्चोत्पलगगनसंयोगादेर्व्यवच्छेदः । एवमपि गगनमात्मादेरन्यदिति शब्देनाऽऽत्मादिव्यावृत्त्या समानाधिकरणेन ज्ञातेन व्यावृत्तिप्रत्यायकेनातिव्याप्तिरित्यनाशङ्कनीयमेव । समानाधिकरणं सत् व्यवच्छित्तिप्रत्यायकमिति सामानाधिकरण्यस्यापि व्यवच्छित्तिप्रत्यायनोपयोगित्वस्य विवक्षितत्वात् । न च गगनमात्मादेरन्यदित्यस्य शब्दस्य व्यावृत्तिसमानाधिकरणत्वम् । व्यावृत्तिप्रत्यायनोपयोगिव्यधिकरणेनापि शब्देन घटः पटो नेति प्रत्यायनात् । विशिष्टप्रत्ययस्याविशेषणविषयत्वे उत्पलं नीलमुत्पलमित्यनयोरविशेषप्रसङ्गं परिहरति—अनीलव्यावृत्तामिति । एवंविधे च लक्षणे उप-

लक्षणस्य विशेषणत्वापत्तिचोद्यमपि न लगतीत्याह–अवच्छेदकत्वाविशेष इति। उपलक्षणमिति। अत्र यथा पटे नीलगुणवर्त्तिनीलत्वमिति शेषः। नीलत्वोपहितो नीलगुणो नीलगुणरहिताद् व्यावृत्तिधीहेतुरिति, काकादयस्तु गृहादीनां विशेषणं न तूपलक्षणमिति भ्रान्तिः कार्या। न च विशिष्टत्वं नाम षट्पदार्थव्यतिरिक्तमनुभवयुक्त्यभ्युपगमाभावादिति दूषयति–व्यावृत्तिश्चेति। ननूत्पलं नीलगुणरहितादन्यदित्यत्र व्यावृत्तेर्व्यावृत्त्यप्रत्यायकत्वे विशेषणत्वानुपपत्तिः, व्यावृत्तिप्रत्यायकत्वे तु व्यावृत्त्यन्तरापेक्षायामनवस्थेत्याशङ्क्य स्वप्रत्यायकत्वेनैव व्यावृत्तिप्रत्यायकतया विशेषणत्वोपपत्तेर्न प्रत्याय्यव्यावृत्त्यन्तरापेक्षेति नानवस्थेत्याह–न च व्यावृत्त्यावपीति। ननु अदण्डव्यावृत्ते देवदत्तदण्डानां युगपदिन्द्रियसंबन्धाद्वर्त्तमानत्वाच्चावश्यं युगपदवभासे विशेषणस्यापि विशिष्टविषयत्वाद् द्वित्वनाशकाले द्वे द्रव्ये इति विशिष्टबोधानुपपत्तिरित्याशङ्क्याह—एवं क्वचिदिति। सत्त्व इति (पृ.२०३)। यदि द्वित्वोत्पत्त्यर्थं द्वित्वान्तरमिष्यते तर्हि तदुत्पत्त्यर्थं द्वित्वान्तरमेष्टव्यमित्यनवस्था द्वित्वोत्पादकादेव द्वित्वाद् द्वे द्रव्ये इति व्यवहारोपपत्तेः कार्यवैयर्थ्यञ्चेति। एकत्वेष्वेव कश्चिद् विशेषोऽस्तीति। अत्र 'न हि भवदुक्तं भवति एकत्वं तावदेवोक्तं भवति सैकमेकत्वमिति, नापि यावदुक्तं भवति सैकमेकत्वं तावदुक्तं भवति सैकैकत्वसहितमेकत्वम्' इति शेषः। ननु त्रित्वादिव्यवहारविषयेष्वेकत्वेषु सैकैकत्वरूपेष्वपि द्वित्वव्यवहाराभावान्न सैकमेकत्वं व्यवहारविषय इति कथमुच्यते तत एव तर्हि द्वित्वादिव्यवहार इति ? न, एवं तर्हि सैकैकत्वरूपैस्त्रित्वारम्भकैर्द्वित्वानारम्भात् सैकैकत्वस्य द्वित्वानारम्भकत्वासिद्धेः। बुद्धेर्विशेषो विष-



यकृतो वेन्द्रियादिहेतुकृतः साक्षात्कारित्वादिर्वा ? प्रथमे उत्तरम्—विषयविशेषेति। द्वितीये उत्तरम्—अन्यस्य साक्षात्कारित्वादेरिति। विषयविशेषेन्द्रियादिहेत्वायत्तसाक्षात्कारित्वादिविशेषव्यतिरिक्तो द्वित्वजनकबुद्धिषु त्रित्वादिजनकबुद्धिव्यावृत्तो द्वित्वलक्षणकार्यगम्यो विशेषोऽतिप्रसङ्गशास्तेति वल्लभाचार्याः। तदपि न, त्रित्वादिजनकबुद्धिव्यावृत्तद्वित्वजनकबुद्ध्यनुगतहेतुवैषम्यमन्तरेण त्रित्वादिजनकबुद्धिविलक्षणपरस्परानुगतद्वित्वजनकबुद्धिरूपकार्यवैषम्यानुपपत्तेः। अनियमेति। यदेकस्य द्वयं तदन्यस्यापि द्वयमेवेति नियमो न स्यादित्यर्थः। अनियममुपपादयति–सैवेति। ननु यथाऽदृष्टविशेषादग्नेरूर्ध्वज्वलनमेव न तु तिर्यग्ज्वलनम्, वायो च तिर्यग्गमनमेव न तूर्ध्वगमनमिति नियमः, एवमदृष्टविशेषादेव क्वचिद् द्वित्वमेव न त्रित्वं क्वचित्तु त्रित्वमेव न तु किञ्चिदपेक्ष्य द्वित्वमित्यपि नियमोऽस्त्वित्यत आह—अदृष्टविशेषेति। अदृष्टविशेषान्नियमोऽदृष्टविशेषानियमः। न च द्वित्वत्रित्वाश्रययोरुपाधिविशेषः परस्परव्यावृत्तोऽस्तीति शेषः। द्वे एकत्वे द्वे द्रव्ये इति वाभिमानो गणनामन्तरेण न जायत इत्यपेक्षाबुद्धिस्तत्र कारणमेष्टव्या द्वित्वाभिमानान्तरं वा ? प्रथमे दूषणम्–अपेक्षाबुद्धिविशेषमिति। अपेक्षाबुद्धेर्विशेष उक्तरीत्या नास्ति, अविशिष्टा च कथं द्वित्वत्रित्वादिविलक्षणाभिमानहेतुरित्यर्थः। द्वितीयं दूषयति–तत्राप्यभिमानान्तरेति। तथापेक्षाबुद्धिरिति। ननु यद्यपेक्षाबुद्ध्यादयोऽविशिष्टा एव द्वित्वत्रित्वादिप्रागभावरूपं सहकारिभेदमपेक्ष्य द्वित्वत्रित्वादिकार्यभेदजनकास्तर्हि द्वित्वोत्पत्तिकाल एव त्रित्वोत्पादकापेक्षाबुद्ध्यादीनां त्रित्वादिप्रागभावानां च सत्त्वात्सकलत्रित्वादिसंख्योदयप्रसङ्ग इति चेत्। न,

द्वित्वप्रागभावसमानाधिकरणैकत्वपर्यवसितापेक्षाबुद्धेर्द्वित्वहेतुत्वात्, त्रित्वादिप्रागभावसमानाधिकरणैकत्वपर्यवसितबुद्धेश्च त्रित्वादिहेतुत्वात् । न चैता बुद्धयो युगपदिति न द्वित्वत्रित्वादीनां युगपदुदयापत्तिरिति । अपेक्षाबुद्धेरविशेषाभिधानं तु द्वित्वादिप्रागभावमन्तरेणेति द्रष्टव्यम्। **सेनावनादौ कथमिति**। अस्य 'अत एव' इत्युपक्रम्य 'इति केचित्' इत्यन्तं परमतेन समाधानं, तद् दूषयति—**तदसदित्यादिना** [ पृ० २०४ ]। **तत्र सन्देहानुपपत्तेरिति** । विशेषे सन्देहानुपपत्तेरित्यर्थः । न हि विंशतेरर्वाक् त्रयोविंशतेरुपरि न भवन्तीति निश्चये किं विंशतिरेकविंशतिर्द्वाविंशतिर्वेति संशय इतरव्यावृत्तं विंशत्येकविंशतिद्वाविंशतिसाधारणं धर्ममन्तरेण संभवति । न चेतरव्यावृत्तो विंशत्यादिसाधारणो धर्मो विंशत्याद्यन्यतमाविशेषमन्तरेण घटते । अन्यथा घटादिरहितायामपि मृदि घटपटसाधारणं धर्ममन्तरेणापि घटः पटो वेति सन्देहापत्तिरित्यर्थः । हेत्वन्तरमाह—**अज्ञान्तरेति** । **महती महत्तरेति**। भूयसी भूयस्तरेत्यर्थः। सेनावनादौ कथमित्यत्र स्वमतेन समाधानमाह—**तस्माद्वस्तुस्थितेनेति** । यदि स्वं स्वं प्रागभावमपेक्ष्य सेनावनादौ सहस्रादिसंख्योदयः कुतस्तर्हि सहस्रमेवाधिकं वेति नियतसंख्याप्रतीत्यभाव इत्यत आह—**तदप्रतीतिरिति** । तस्य सेनावर्तिनो बहुत्वस्य सहस्रत्वादिजात्यवच्छेदेनाप्रतीतिरिति विवक्षितं न तु बहुत्वस्यैवाप्रतीतिः भूयसी सेनेत्यादिप्रतीतेरुक्तत्वात् , अनेकत्वसंख्यां प्रत्यपेक्षाबुद्धिरुत्पादिका न तु व्यञ्जिकेत्युक्तत्वाच्च नियतापेक्षाबुद्धिर्द्वित्वसहितैकत्वबुद्धिरित्यादिका सहस्रत्वादिजातीनां संख्याश्रयाणां व्यञ्जिका ।



**न चैवमिति**[पृ.२०६] । न चाहेतुकोऽविनाश इत्यर्थः । **सामानाधिकरण्यमिति**[पृ.२०७] । सामानाधिकरण्यमेकाधिकरणसंबन्धः, स च विशेषणतत्प्रत्यायकव्यावृत्त्योः साधारणो धर्म इति तयोः सारूप्यमित्यर्थः । विशेषणविशेष्ययोरभेदो निरस्त इति 'अभेदेन'इत्यन्यथा व्याचष्टे–**सारूप्येणेति**(पृ. २०८)। सारूप्यं सामानाधिकरण्यं, तच्च वीणाशब्दयोः शब्दवीणेति वा स्यात् शुक्लो घट इतिवच्छब्दवती वीणेति वा स्यात् , रूपवान् घट इतिवत् , एवमुत्तरत्रापि । **तावताऽपीति** [पृ.२०९] । यदा द्वित्वोत्पत्तिकाले एकं द्रव्यमिति ज्ञानं तदाऽपि द्वित्वसामान्यज्ञानकालेऽपेक्षाबुद्धिनाशः, द्वित्वगुणज्ञानकाले च द्वित्वविनाश इति तदुत्तरकाले द्वे द्रव्ये इति ज्ञानानुपपत्तिस्तदवस्थेत्यर्थः । **द्वित्वादिसंख्योत्पत्त्यनभिभूतस्येति** । अत्र द्वित्वादिसंख्योत्पत्तिशब्देन द्वित्वादिसंख्योत्पत्तिपूर्वक्षणो विवक्षितः । तेनानभिभूतस्याप्रतिबद्धस्यैकत्वस्यैकं द्रव्यमिति विशिष्टज्ञानहेतुत्वम् । इह तु द्वित्वोत्पत्तिपूर्वक्षणः प्रतिबन्धको जात इत्येकं द्रव्यमिति ज्ञानं न जातमित्यर्थः । यथाश्रुते द्वित्वोत्पत्तेरेकं द्रव्यमिति ज्ञानजनकैकत्वप्रतिबन्धकत्वेन द्वित्वोत्पत्तिपूर्वक्षणे प्रतिबन्धकाभावाद् द्वित्वोत्पत्तिक्षणे एकमेकं द्रव्यमिति ज्ञानं दुर्वारमेवेति

**एकतराप्रतीताविति** (पृ.२१०) । परिमाणविशेषाप्रतीतावपि भूगोलकादिप्रतीतिरित्यर्थः । **मानव्यवहारकारणमिति**। मानव्यवहारविषय इत्यर्थः। नन्वियत्ताव्यवहारो मानव्यवहारः, स च पञ्च पञ्च पलानीत्यादिकोऽन्यत्राप्यस्तीत्यतिव्याप्तिरित्यत आह—**मानव्यवहारास्त्विति** । पलसंख्याव्यवहारविलक्षण इति । पलव्यवहारश्च सं-

ख्याव्यवहारश्च, ताभ्यां विलक्षण इत्यर्थः । तेन संख्यागुरुत्वविषयमानव्यवहारव्यतिरिक्तमानव्यवहारविषयो गुणः परिमाणमिति लक्षणम् । यद्वा, मानव्यवहारो नाम परिमाणव्यवहारः, स च पलादिव्यवहारविलक्षण इति नातिप्रसङ्ग इति । न च महत्त्वव्यवहारोऽवयवबहुत्वविषयः कुम्भादाविति लक्षणासिद्धिः संख्याद्यविषयत्वे सतीति लक्षणासिद्धश्चेति वाच्यम् । द्व्यणुकबहुत्वाप्रतीतावपि त्र्यणुके द्वाभ्यामारब्धे द्वितन्तुकादौ महत्त्वव्यवहारात् अविशिष्टेऽवयवबहुत्वे प्रचितारब्धे महत्त्वोत्कर्षप्रतीतेश्च । प्रचयविशिष्टमवयवावित्त्वं तथाविधमहत्त्वोत्कर्षप्रतीतिविषय इत्यपि न । अप्रचितैरप्यधिकैरारब्धे प्रचितत्रयारब्धे तुल्यमहत्त्वोत्कर्षप्रतीतेः । तत्र वृद्धत्वोत्कर्ष एव महत्त्वोत्कर्षविषय इति चेत् । न, अनुगतं विषयमन्तरेण प्राचिताप्रचितारब्धानुगतमहत्त्वोत्कर्षविशेषप्रतीतेरनुपपत्तेः । अनुगतविशेषमन्तरेण महत्त्वविशेषोत्पत्तिरेव कथमिति चेत् ? प्रागभावविशेषादिति गृहाण । नन्वणुमहदित्यादिपदानां विना भावप्रत्ययं परिमाणविशेषावच्छिन्नद्रव्यवाचित्वात्तच्चातुर्विध्यमनेनोक्तं स्यान्न परिमाणचातुर्विध्यमित्यत आह—**भावप्रधान** इति (पृ.२११) । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं चेति विवक्षितं भाष्यकारस्येत्यर्थः । **तदेतादिति** । अत्र तच्छब्देन महत्त्वं परामृशति न त्वणुत्वादीति । **तृणोलपादिन्यायेनेति** । यथोलपपदेन तृणविशेषेऽभिहिते तत्सान्निधिपाठितसामान्यवचनतृणपदस्योलपव्यतिरिक्ततृणपरत्वं निर्णीतं, तथाऽत्रापि मनःशब्देन परमाणुविशेषेऽभिहिते सामान्यवचनपरमाणुपदस्य मनोऽन्यपरमाणुपरत्वं निर्णेयमित्यर्थः । कुवलयादावणुव्यवहारस्य गौणत्वार्थं मुख्ये बाधकमाह—**महत्त्वोत्पत्ताविति** ।



**चाक्षुषत्वान्यथानुपपत्त्या चेति** । चाक्षुषद्रव्यत्वेन महत्त्वानुमानादित्यर्थः । **प्रकर्षभावः** प्रकृष्टता । **भज्यत इति** । सेव्यत इत्यर्थः । **द्रव्यत्वेन परिमाणानुमानादिति** न युक्तम् । परिमाणशब्देन महत्त्वविवक्षायामपसिद्धान्तताऽणुप्रत्यक्षत्वयोरापत्तेः, अणुमहत्त्वसाधारणपरिमाणविवक्षायामप्रसिद्धविशेषणत्वात् अणुत्वासिद्धावणुमहत्साधारणपरिमाणासिद्धेः इति चेत् । न, संख्याव्यावृत्तमहत्त्वसमवेतजात्याधारस्य परमाण्वादौ साधनात् । ननु संख्याव्यावृत्ता महत्त्वसमवेता जातिः किं महत्त्वत्वं तदवान्तरा ततः परा वा ? नाद्यो बाधादपसिद्धान्ताच्च । नेतरः अप्रसिद्धविशेषणत्वादिति चेत् । न, महत्त्वसमवेतजातेः सामान्यतो विवक्षितत्वात्, विशेषविकल्पेन साध्यसामान्यदूषणे सर्वानुमानविलयादिति । इतोऽपि परमाण्वादौ न महत्त्वाभावकृतोऽणुत्वव्यवहार इत्याह—**द्व्यणुकादिति**(पृ.२१२) । यो हि परमाणावणुव्यवहारमिच्छति स द्व्यणुकादप्रकृष्टः परमाणुरिति व्यवहारमिच्छत्येव तद् यद्यणुत्वं महत्त्वाभावः न तर्हि तत्रापकर्षो भावतः सम्भवतीत्यर्थः । द्व्यणुकं परिमाणवदित्यत्र महत्त्वेन सिद्धसाधनमाशङ्क्याह—**न द्व्यणुकस्य महत्त्वमिति** । **अन्यायश्चानेकार्थत्वमिति** । न ह्येकत्र वाचकत्वशक्त्याऽन्यत्र तत्सादृश्येन च शब्दप्रयोगे उपपन्ने उभयत्रापि वाचकत्वकल्पनाबीजमस्ति, सिंहो देवदत्त इत्यादौ सिंहादिपदानां देवदत्तादिवाचकत्वकल्पनापत्तेरिति । यत्र त्वनेकेष्वेकनिमित्तमन्तरेण सादृश्यादिकमनुपजीव्य शब्दः प्रयुज्यते तत्रानेकार्थत्वमेव न्याय्यं, यथाऽक्षादिशब्द इति । **पक्षादिति** । अणुपरिमाणसिद्धेरनन्तरमित्यर्थः । **स्वर्गादिशब्दवदिति** । यथा हि "स्वर्गकामो यजेत" इत्यत्र दुःखासंभिन्ननिरतिशयसुखवाचकः स्वर्गशब्दो-

ऽर्थवादबलाद्,दुःखादिसम्भिन्ने तु सारूप्यादप्युपपद्यत इति गौण इति व्यवस्था, एवमणुशब्दोऽपि परमपूज्यकणादादिव्यवहारबलादणुपरिमाणे मुख्यः, आमलकादिपरिमाणे तत्सादृश्यात्प्रकर्षविशेषाभावादुपपद्यत इति गौण इत्यर्थः । **उपपत्तेरिति** । उपपत्तिरनुमानम् । यथा हि गगनं दीर्घत्वातिरिक्तपरिमाणाधिकरणं द्रव्यत्वादिति गगने महत्त्वसिद्धिः, एवं गगनं महत्त्वातिरिक्तपरिमाणाधिकरणं द्रव्यत्वादिति दीर्घत्वसिद्धिः । यथा च परमाणुर्ह्रस्वत्वातिरिक्तपरिमाणाधिकरणं द्रव्यत्वाद् घटवदिति परमाणावणुत्वसिद्धिः, एवं परमाणुरणुत्वातिरिक्तपरिमाणाधिकरणं द्रव्यत्वादिति ह्रस्वत्वसिद्धिरपि । दीर्घत्वादिनाऽर्थान्तरतानिवृत्त्यर्थं दीर्घत्वातिरिक्तादिपदम् । दीर्घत्वादिसिद्ध्याऽपि प्रकृतानुमानचरितार्थत्वस्य वक्तुं शक्यत्वादिति । ननु संस्थाने विशेषवत्येव दीर्घत्वं दृष्टमित्याशङ्कां महत्त्वसमानयोगक्षेमतया परिहर्तुमुक्तम्—**यथा हि महत्त्वं प्रकृष्यमाणमिति** । केचित्तु दीर्घत्वं क्वचित् परमकाष्ठापन्नं प्रकृष्यमाणत्वान्महत्त्ववदित्यनुमानम् । यथा हि महत्त्वं प्रकृष्यमाणमित्यादिनोपपत्तेरुभयत्रापि तुल्यत्वादित्यन्तेनाक्षिप्तमिति व्याख्यातवन्तः, तन्न, समिदादिगतदीर्घत्वपक्षीकरणे बाधात्, गगनादिगतदीर्घत्वपक्षीकरणे स्वाश्रयासिद्धेः । दीर्घत्वजातिरप्रकृष्टत्वानधिकरणाश्रिता साक्षात्परिमाणत्वावान्तरजातित्वान्महत्त्ववदित्युपपत्तिपरः प्रकृतो ग्रन्थ इत्यपि न । दीर्घत्वमात्रवृत्तित्वाभावादिना सोपाधित्वादिति । नन्वीश्वरबुद्धिः सकलैकत्वविषयत्वात् सकलद्रव्यवर्त्तिबहुत्वं जनयेत् न तु त्रित्वमित्याशङ्कामपनुदति—**ईश्वरबुद्धेरिति** [पृ. २१३] । सर्वैकत्वविषयाऽपि बुद्धिस्त्रित्वोत्पादकमहत्त्वमपेक्ष्य त्रित्वं चतुष्ट्वोत्पादक-



महत्त्वमपेक्ष्य चतुष्ट्वं जनयतीति । यद्वा, अदृष्टशब्देन त्रित्वादिप्रागभावो 'न दृश्यते' इति व्युत्पत्त्या विवक्षितः । **रूपाद्युत्पत्तिसमकालमिति** । अस्य महत्त्वं दीर्घत्वं च करोतीत्यनेनान्वयः । पूर्वत्रापरितोषात्पक्षान्तरमाह—**द्रव्योत्पत्तिसमकालत्वाच्चेति** । द्रव्योत्पत्तिकालोत्पन्नया द्व्यणुकत्रित्वसंख्यया त्रसरेणुमहत्त्वोपपत्तेर्न द्व्यणुकसंयोगकाले त्रित्वे प्रमाणमस्तीति पूर्वत्रापरितोषहेतुः । ईश्वरापेक्षाबुद्ध्यादीनां हेतूनां सत्त्वात्संयोगकालेऽपि त्रित्वं स्यादिति चेत् । न, ईश्वरापेक्षाबुद्धिजाऽनेकसंख्यायामारम्भकसंयोगस्यापि हेतुत्वात् । एवमपि यावद् द्व्यणुकसंयोगं संख्याप्रवाहः स्यादिति चेत् । न, द्रव्यप्रागभावस्यापि हेतुत्वस्वीकारात् । अन्यथा निष्प्रयोजनसंख्यानन्त्यापत्तेः । परमाणुद्वित्वद्व्यणुकबहुत्वव्यतिरिक्ता केवलेश्वरापेक्षाबुद्धिजन्या संख्या निष्प्रमाणिकेति रहस्यम् । **विभागस्तु इति** [पृ. २१४] । द्व्यणुकयोर्विभागात्संयोगनाशः, ततस्त्र्यणुकनाशः, ततस्तद्गतमहत्त्वनाश इति कारणविभागः परम्परया महत्त्वविनाशक एव न तूत्पादकः त्र्यणुकारम्भकसंयोगजनककर्मविनाशसमसमयोत्पन्नकर्मणा त्र्यणुकमहत्त्वसमकालमेव द्व्यणुकविभागारम्भादिति भावः । **परत्वापरत्वे चेति** । अत्र परिमाणसमसमयोत्पन्नादिकालत्रसरेणुसंयोगारभ्यत्वादिति शेषः । तथा वेगद्रवत्वादीनामपि द्व्यणुकगतो हि वेगो द्व्यणुकयोः संयोगात् त्र्यणुकसमये नष्ट इति न महत्त्वकारणम् । अव्यवहितपूर्वक्षणवर्त्तित्वाभावात् । न च त्र्यणुकोत्पत्तिक्षणे वेगोऽस्ति हेत्वभावात्, द्रव्यान्तरगतस्त्वप्रत्यासन्न एवेति । द्रवत्वादयस्तु तद्रहितैरप्यारब्धे महत्त्वदर्शनादप्रत्यासन्ना इति । **तथोक्तं द्रव्य इति** । द्रव्यपदार्थे बहूनां द्व्यणुकानां त्र्यणुकारम्भ-

कत्वमुक्तम् । तेनावयवबहुत्वादेव क्लृप्तशक्तेस्त्र्यणुकमहत्त्वमुपपन्नमिति, अणुपरिमाणकारणमित्युक्तप्रायमित्यर्थः । द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणारम्भकत्वे मानाभावाच्च । द्व्यणुकपरिमाणं परिमाणजनकं परिमाणासमवायिकारणं वा द्रव्यसमवायिकारणपरिमाणत्वात्तन्तुपरिमाणवत् इत्यादेरनणुत्वेन सोपाधित्वात् । न चास्य पक्षेतरत्वं मनःपरिमाणस्य पक्षपक्षतुल्यव्यतिरिक्तस्य व्यावर्त्यस्य सत्त्वात्, द्व्यणुकपरिमाणस्य यत्किञ्चित्परिमाणजनकत्वेनास्य चरितार्थत्वात्, अभिमतत्र्यणुकपरिमाणजनकत्वासिद्धेरर्थान्तरग्रस्तत्वाच्च । द्व्यणुकपरिमाणं त्र्यणुकपरिमाणाजनकं परिमाणत्वाद् घटपरिमाणवदित्यादिना द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणजनकत्वनिषेधाच्च । अद्व्यणुकपरिमाणत्वं चात्र पक्षेतरत्वान्नोपाधिः । न च द्व्यणुकपरिमाणं त्र्यणुकपरिमाणजनकं द्व्यणुकपरिमाणत्वादिति व्यतिरेकिणा सत्प्रतिपक्षत्वम् । अस्य त्र्यणुकादेः सपक्षादपि व्यावृत्तत्वेनासाधारणत्वात् ।

अथ त्र्यणुकपरिमाणमसमवायिकारणजन्यं कार्यपरिमाणत्वात् घटपरिमाणवदिति सामान्यतस्त्र्यणुकपरिमाणासमवायिकारणसिद्धौ द्व्यणुकपरिमाणं त्र्यणुकपरिमाणासमवायिकारणं द्व्यणुकपरिमाणत्वान्न यदेवं न तदेवं, यथा घट इति केवलव्यतिरेकिणा निरस्ताप्रसिद्धविशेषणत्वकलङ्केन सत्यपि सपक्षे तद्व्यावृत्तत्वानिश्चयादुन्मूलितासाधारणत्वदोषेण सत्प्रतिपक्षत्वमिति नवीनतार्किकमतमाश्रयसे, तन्न । त्र्यणुकपरिमाणं परिमाणव्यतिरिक्तासमवायिकारणजन्यमुभयमात्रानिष्ठनिष्ठ(?)जन्यपरिमाणत्वादित्यादिना सामान्यतः परिमाणव्यतिरिक्तत्र्यणुकपरिमाणासमवायिकारणसिद्धौ तत्रैव यत् त्र्यणुक-



परिमाणासमवायिकारणं तदपरिमाणमिति साध्यव्यापकत्वनिश्चयादपरिमाणत्वेन सोपाधित्वात् । पक्षतत्तुल्यव्यतिरिक्तघटादिपरिमाणस्य व्यावर्त्यत्वान्न पक्षेतरता । द्व्यणुकपरिमाणं न परिमाणारम्भकमणुत्वान्मनःपरिमाणवदित्यादीनि तु द्रव्यासमवायिकारणपरिमाणत्वादिना सोपाधित्वादुपेक्षणीयानि । अथ द्व्यणुकबहुत्वं त्र्यणुकपरिमाणानारम्भकं बहुत्वाद् घटबहुत्ववदिति द्व्यणुकबहुत्वस्यापि त्र्यणुकपरिमाणकारणत्वनिषेधः किं न स्यादिति चेत् । उच्यते, त्र्यणुकलिङ्गजास्मदाद्यपेक्षाबुद्धिजन्यद्व्यणुकबहुत्वस्य धर्मित्वे सिद्धसाधनत्वादीश्वरापेक्षाबुद्धिजन्यद्व्यणुकबहुत्वस्य त्र्यणुकपरिमाणाव्यवहितपूर्वक्षणवर्तित्वरहितस्यापि धर्मित्वे सिद्धसाधनादेव त्र्यणुकपरिमाणाव्यवहितपूर्वक्षणवर्तिनः पुनरीश्वरापेक्षाबुद्धिजन्यबहुत्वस्य धर्मित्वे धर्मिग्राहकप्रमाणबाधः । तस्य त्र्यणुकपरिमाणे समवायिकारणत्वेनैव सिद्धेः । त्र्यणुकपरिमाण बहुत्वसंख्याकारणमिति । अत्र बहुत्वसंख्यामात्रकारणकमिति विवक्षितम् । मात्रशब्देन महत्त्वप्रचययोर्निवृत्तिः । तेन महत्त्वाद्यजन्यं बहुत्वसंख्याकारणकं चेति द्वयं साध्यं, तेन महत्त्वबहुत्वाभ्यामारब्धान्महत्त्वात् सपक्षादपि व्यावृत्तेः परिमाणप्रचयासंभवे सति कार्यमहत्त्वादित्यसाधारणो न व्यतिरेकीति निरस्तम् । बहुत्वजन्यत्वं महत्त्वाद्यजन्यत्वं चाश्रयभेदेनान्यत्र सिद्धमिति नाप्रसिद्धविशेषणता, एकत्र द्वयमसिद्धमिति न विद्यमानसपक्षता । "न बहुत्वमिति भाष्यं केवलबहुत्वनिषेधकम्" इति व्याख्यायये महत्त्वस्थाने बहुत्वं कारणमेव न भवतीत्येवंपरमेतद् व्याचक्षते, तान् प्रत्याह—न तु समानेति(पृ०२१८) । तेन महत्त्वान्येव महत्त्वमारभन्त इति पूर्वभाष्ये महत्त्वे महत्त्वानि चेति विग्रहाद्यत्र म-

ह्रस्वे प्रचयानपेक्षमहत्त्वारम्भके तत्रान्ययोगव्यवच्छेदार्थ एवकारार्थः, यत्र महत्त्वानि तत्रायोगव्यवच्छेद इत्यभिप्रेतम् । ननु यद्यपि तूलपिण्डयोर्न बहुत्वं तथापि तूलपिण्डतदवयवपरम्परायां द्व्यणुकपरमाणुपर्यन्तायां बहुत्वमस्ति तत् साक्षात् परम्परया वा द्वितूलकावयववृत्तित्वात् । द्वितूलके महत्त्वमारभते इति किं प्रचयेनेत्येतदाशङ्कानिराकरणभाष्यमवतारयति—अन्यथेति । यावन्तो हि प्रचिततूलपिण्डाभ्यामारब्धे द्वितूलके तूलपिण्डद्व्यणुकपरमाण्वादयस्तावन्त एवाप्रचिताभ्यां तूलपिण्डाभ्यामारब्धे द्वितूलके न्यूनपरिमाणे तत्तुल्यगुरुत्ववति । अन्यथा तुलया धृतस्य समानफलत्वानुपपत्तेः, तदवयवपरम्परान्यूनत्वे तद्गुरुत्वानामप्यल्पत्वात । न च गुरुत्वानामबहुत्वेऽप्युत्कर्षवत्तया बहुभिरपि गुरुत्वैर्विशिष्टता । तूलजातीयतया गुरुत्वोत्कर्षाऽभावानुमानात् । तस्मादप्रकृष्टगुरुत्वानामविशेषात् परम्परावयवबहुत्वस्याप्यविशेष इति प्रचय एव महत्त्वातिशयजनक इत्यर्थः । परमाणुपरिमाणस्याकारणत्वादिति (पृ. २१६)। परमाणुपरिमाणं द्व्यणुकपरिमाणाजनकं परिमाणत्वात् घटपरिमाणवदित्यनुसन्धेयम् । अस्माकं तु भाक्तव्यवहारपौनरुक्त्यान्यथानुपपत्तेरिति तर्को योगिप्रत्यक्षसहितक्लिष्टत्वान्न परं प्रति परमाण्वादिष्वणुत्वात् भिन्नं ह्रस्वत्वं साधयति । तस्मात्परमाणुगतमेतदणुत्वमेतदन्याणुत्वव्यतिरिक्तैतत्परमाणुनिष्ठपरिमाणभिन्नं सत्त्वात् घटवदित्याद्यणुत्वव्यतिरिक्तह्रस्वत्वसाधनं द्रष्टव्यम् । ननु प्राचीनन्यूनपरिमाणादधिकं परिमाणमुत्पन्नं प्राचीनन्यूनपरिमाणविनाशकारणमस्तीत्याशङ्क्य किं प्राचीनन्यूनाधिकपरिमाणप्राचीनन्यूनपरिमाणसमवायिकारणासमवायिकारणव्यतिरिक्तानि समवायिकारणसमवायिकारणानि त्वा-



न्येव वेति विकल्प्य प्रथमे कल्पे दूषणमाह—परिमाणान्तरोत्पत्तौ चेति(पृ. २१७)। द्वितीये दूषणमाह—कारणसंख्येति । कारणं प्राचीनपरिमाणसमवायिकारणं, संख्यादयश्च प्राचीनपरिमाणासमवायिकारणानि, तेषां तत्कारणत्वात् । प्राचीनन्यूनपरिमाणकारणत्वादित्यत्राधिकपरिमाणकारणत्वं न घटत इति शेषः । शरीरसंयुक्ताहारावयवैः प्राचीनशरीरावयवसहितैरारब्धं शरीरान्तरमधिकपरिमाणसमवायिकारणमस्तु, कथं समवायिकारणान्तराभाव इत्याशङ्क्य किं पूर्वशरीरावयवाः पूर्वशरीरे विद्यमाने शरीरान्तरमारभन्ते विनष्टे वेति विकल्प्य प्रथमे दूषणमाह—संयोगीति । शरीरद्वयानुपलब्धेर्मूर्तानां समानदेशत्वानुपपत्तेश्चेति भावः । द्वितीये त्वाश्रयविनाशात् परिमाणविनाशः सिद्ध इति नासौ दूषितः । ननु मा भूत्समवायिकारणान्तरं पूर्वशरीरावयवतत्संयुक्तद्रव्यान्तरगतं तत्संयुक्तद्रव्यमात्रगतमेव वा सातिशयबहुत्वाद्यसमवायिकारणान्तरं भविष्यतीत्यत आह—अकारणेति । संयुक्तद्रव्यमात्रगतबहुत्वादिकारणपक्षे दूषणमाह—असमवायीति ॥

पूर्ववत्प्रमाणलक्षण इति[पृ. २१८]। यथा मानव्यवहारो व्यवहर्तव्ये परिमाणे प्रमाणं रूपादिगुणवर्गादगुणवर्गाच्च व्यावृत्ततया परिमाणस्येतरभेदव्यवहारसाधकत्वाल्लक्षणं च, तथा पृथगिति व्यवहारः पृथक्त्वे प्रमाणं लक्षणं च भविष्यतीत्यनुग्राह्यप्रदर्शनम्। भेदस्य साधकस्यानुग्राहकाभावं शङ्कते—तर्कास्त्विति । तर्कस्तु न स्यादिति । अत्रेतरभेदसाधकस्येति शेषः । न केवलमनुकूलतर्काभावात् पृथक्त्वस्येतरभेदसाधकमनुमानमयुक्तं,

किन्तु पृथक्त्वपदमन्योन्याभाववाचकम् इतरत्वादिपदपर्यायत्वात् भिन्नत्वादिपदवदिति प्रतिपक्षाक्रान्तत्वाच्चेत्याशयवानाह–अन्यपदार्थान्तरमितरद् भिन्नमिति। तत्र सत्प्रतिपक्षत्वं निराचष्टे–पृथगादिशब्दा इति । भिन्नत्वादिपदानामप्यन्योन्याभाववाचकत्वानङ्गीकारात् साध्यविकलो दृष्टान्त इति भावः । अनुकूलतर्काभावं परिहर्तुं घटात्पटः पृथगन्य इत्यादौ पृथगन्य इति व्यवहारस्यान्योन्याभावविषयत्वे घटादिति पञ्चमी किमवधौ किं प्रातिपदिकार्थ एव पृथगन्य इत्याद्युपपदमहिम्ना किं वाऽन्योन्याभाव एवेति मनसि विकल्प्य प्रथमे पञ्चमीसम्बन्धानुपपत्तिं दर्शयति–न हि घटात्पट इति। घटात्पटो न भवतीति घटावधेः पटे तादात्म्याभावोऽसाधुभूतयैव पञ्चम्या दर्शितः, तादात्म्याभावस्य घटावधित्वे घटात्पटो न भवतीति प्रयोगस्य साधुत्वप्रसङ्गः, घटः पटो न भवतीति प्रयोगस्य चासाधुत्वप्रसङ्ग इति शेषः। द्वितीयं पक्षमुत्थापयति—प्रातिपदिकार्थमात्र एवेति। दूषयति—नेति। "अन्यारादितरर्ते" [पा० सू० २–३–२९] इति सूत्रमन्यशब्दार्थमहिम्ना पञ्चमीत्येवंपरं न त्वन्यशब्दमहिम्नेति । तथा सति पृथग्भिन्न इत्यादौ पञ्चमीविरहापत्तेः । तत्र पृथग्भिन्न इत्युपपदमहिम्ना पञ्चमीत्यचारु । अन्यशब्दार्थस्यैकस्यास्मादिदमन्यदस्मात्पृथगस्माद् भिन्नमित्यादौ पञ्चमीप्रयोजकत्वे सम्भवति पृथगादिशब्दानां प्रयोजकत्वकल्पनायां गौरवादिति, बलवद्बाधकमन्तरेण विधिरूपं पञ्चम्यर्थमुत्सृज्य, शब्दमाहिम्ना निरर्थकैव पञ्चमीत्यङ्गीकारे सकलवृद्धव्यवहारविप्लवाच्च। न च प्रातिपदिकार्थेनैव सार्थ-



कता। तस्य प्रातिपदिकेनैव गतार्थत्वात् । तस्मादन्यशब्दार्थमहिम्ना पञ्चमी न शब्दमाहिम्नेति स्थिते यदि पृथगादिशब्दानां तादात्म्याभावोऽर्थः, तर्हि घटो नेत्यत्रापि पञ्चमीप्रयोग इति। तदनेन यद्यन्योन्याभावः पृथक्त्वं स्याद् अवधिनिरूप्यः स्यादिति तर्को दर्शितः। ननु न पृथगादिशब्दसमानार्थो नञ्, पृथगादिशब्दानामन्योन्याभावविशिष्टवाचकत्वात् नञश्च निष्कृष्टान्योन्याभाववाचकत्वात् कथं पृथगादिशब्देन समानार्थतया नञोऽपि योगे पञ्चमीप्रसङ्ग इति शङ्कते–नञर्थविशिष्ट इति। भवतु घटः पटो नेत्यत्र निष्कृष्टाभाववाचकत्वम्, अपट इत्यत्र नञ्समासे तादात्म्याभावविशिष्टोऽर्थ इत्यपट इत्यत्र पटान्न भवतीत्यपट इति विग्रहः स्यात् पटो न भवतीत्यपट इति च न स्यादिति। समाधत्ते-नेति। तृतीयं पक्षं दूषयति–न च पञ्चमीति। योऽर्थ इति। अत्रावधिनिरूप्य इति शेषः। धर्मान्तरमिति। अत्रावध्यनिरूप्यादन्योन्याभावादिति शेषः । अविशिष्टाद्वैशिष्ट्यमेव पृथक्त्वमस्त्विति शङ्कते–पृथक्शब्दस्येति । समाधत्ते-शब्दबुद्धिदण्डाद्यविशिष्टत्वेऽपि तद्विशिष्टस्येति। तद्विशिष्टस्येति पृथक्त्वविशिष्टस्येत्यर्थः। न हि व्योमात्ममैत्रादीनां विशिष्टत्वमात्रं पृथक्त्वं विशिष्टमात्रस्य कुम्भादावपि विद्यमानत्वेन कुम्भादिपृथक्त्वरूपत्वानुपपत्तेः। अपि च शब्दबुद्धिदण्डादिविशिष्टत्वमनाकाशाऽचेतनाऽदण्डिभ्यो व्योमादीनां पृथक्त्वमिति वाच्यं, तन्न, शब्दाद्यभावदशायामपि गगनादौ पृथक्त्वव्यवहारादिति भावः। यस्तु घटादिभ्यो वैधर्म्यमेव पटादीनां पृथक्त्वमाह, स किं वैधर्म्यशब्देन घटाद्यविद्यमानधर्मत्वमेव वैधर्म्यमाचष्टे। किं वा घटादिधर्मविजातीयधर्मत्वम् ? प्रथमे दूषणमाह-एतेनेति। व्य-

वहितां पञ्चमीसम्बन्धानुपपत्तिं परामृशति । यदि घटाद्यविद्यमानधर्मत्वं पटादीनां पृथक्त्वं तर्हि घटाद्यविद्यमानधर्मवान् पट इत्यत्रापि घटादिति पञ्चमीप्रसङ्ग इत्यर्थः । कश्चित् एतेनेति शब्दादिवैधर्म्याभावेऽप्याकाशादौ घटपृथक्त्वादेर्व्यवहारादिति व्याख्यातवान्, तन्न । शब्दाद्यभावेऽपि घटाविद्यमानानन्तधर्मसत्त्वात् । द्वितीये दूषणमाह—श्यामादिति । श्याम एव परमाणौ श्यामविजातीयरूपसत्त्वादित्यर्थः । जातिसङ्करेति । जातिरूपमपि शाबलेयावधिकं पृथक्त्वं शाबलेयान्योन्याभाववति सर्वस्मिन् द्रव्ये वक्तव्यं, न तु शाबलेयेऽपि । शाबलेयः शाबलेयात् पृथगिति व्याघातात् द्रव्यत्वेन तुल्यव्यक्तिकतापत्तेश्च । तथा च शाबलेयावधिकं पृथक्त्वं गोत्वपरिहारेण घटादौ वर्तमानं गोत्वं च शाबलेयावधिकं पृथक्त्वपरिहारेण शाबलेये वर्त्तमानं शाबलेयादौ सङ्कीर्यत इति सङ्करः । यद्वा, घटावधिकं पृथक्त्वं पटावधिकपृथक्त्वाभाववति पटे वर्तते पटावधिकं च पृथक्त्वं घटावधिकपृथक्त्वाभाववति घटे वर्तते तदनयोः स्तम्भादौ सङ्करादुभयनिरासो विशेषाग्रहादिति । व्यभिचाराच्चेति । रूपाद्यभावेऽपि वाय्वादौ पृथक्त्वमिति व्यभिचारादित्यर्थः । गुणसादृश्यं तद्योगो गुणयोग इति । स एवेति । भेद एवेत्यर्थः । भेदशब्देन स्वरूपं विवक्षितं, तादात्म्याभावो वा, वैधर्म्यं वा ? प्रथमं दूषयति—न स्वरूपस्येति । द्वितीयतृतीयावपनुदति—इतरेतराभाववैधर्म्ये चेति । तथा व्यवहारोपपत्तेरिति । द्वौ पृथक् त्रयः पृथगिति व्यवहारोपपत्तेरित्यर्थः । यथा द्वौ शुक्लावित्यादिव्यवहार एकैकपर्यवसितशुक्लगुणाभ्याम्, अन्यथा द्विशुक्लत्वादेरापत्तेरित्याह—द्वौ शुक्लावित्यादिव्यवहारवदिति । अन्योन्यावधित्वानवधित्वाभ्यामिति । चैत्रसम-



वेतमेकपृथक्त्वं मैत्रावधिकं, मैत्रसमवेतमेकपृथक्त्वं चैत्रावधिकं, चैत्रमैत्रौ पृथगिति प्रतीतिविषयस्तु पृथक्त्वं न चैत्रावधिकं नापि मैत्रावधिकमतो विरुद्धधर्माध्यासेनैकपृथक्त्वाभ्यां द्विपृथक्त्वस्य भेद इति । नन्वस्त्वन्योन्यावधिकाभ्यामन्योन्यानवधिकस्य द्विपृथक्त्वस्य भेदो गुणत्वं तु कुतोऽनेकसमवेतस्य जातिभावादिति शङ्कां परिहरन्नुपसंहरति—तस्मादिति । तथाभूतेनेति । एकैकस्मिन् कात्स्न्येन वर्तमानेनेत्यर्थः । यथा द्वित्वं व्यासक्तवृत्तित्वादव्यासक्तवृत्तेः सामान्याद्भिद्यत इति परिशेषाद् गुणः,एवं द्विपृथक्त्वमपीत्यर्थः । यदि द्विपृथक्त्वमन्योन्यानवधिकत्वादेकपृथक्त्वाभ्यामन्यदिति तर्हि देवदत्ताच्चैत्रमैत्रौ परौ न तु चैत्रान्मैत्राद्वेति प्रतीयमानं द्विपरत्वमन्योन्यानवधिकत्वाच्चैत्रमैत्रैकपरत्वाभ्यां भिन्नं प्रसज्यते इति शङ्कते—एवं तर्हीति । किं समानदेशस्थयोश्चैत्रमैत्रयोर्देवदत्तमपेक्ष्य ये एकपरत्वे ताभ्यां चैत्रमैत्रौ पराविति द्विपरत्वस्यान्योन्यावधिकत्वं भेदकं किं वा न्यूनाधिकदेशस्थयोः चैत्रमैत्रयोर्ये एकपरत्वे ताभ्याम् ? आद्यं दूषयति—एकपरत्वस्यापीति । तथाभूतत्वेऽन्योन्यानवधिकत्वे विरोधाभावेनैकपरत्वयोरन्योन्यानवधित्वावधित्वरूपविरुद्धधर्माध्यासाभावेन भेदाभावात्तादात्म्यनिषेधाभावादित्यर्थः । इदमेवोपपादयति—न हीति । समानदेशस्थयोरिति । अत्रान्योन्यापेक्षयेति शेषः । न च तं विनाऽन्योन्यापेक्षया संयुक्तसंयोगविशेषं विना ते अन्योन्यावधिके परत्वापरत्वे भवत इति । द्वितीयमुत्थापयति—यत्रास्तीति । यत्रेति ययोर्न्यूनाधिकदेशस्थयोरित्यर्थः । अस्तीत्यत्रान्योन्यापेक्षया संयुक्तसंयोगविशेष इति शेषः । अस्त्वन्योन्यावधिकत्वं न्यूनाधिकदेशावस्थितपरत्वस्यान्योन्यानवधि-

त्वेन तु ततो भेदः किं द्वौ पराविति प्रत्ययसिद्धस्य निर्विशेषस्य द्विपरत्वस्य किं वा द्वौ परतराविति प्रत्ययसिद्धस्य द्विपरतरत्वस्य किं वा द्वौ परपरतराविति प्रत्ययसिद्धस्य द्विपरपरतरत्वस्य ? न प्रथमद्वितीयौ। देवदत्तात् चैत्रमैत्रौ निर्विशेषपरौ परतरौ वेति प्रतीतेरेव सिद्धेरित्याह—न तत्रापीति। कथं तर्हि द्वे परे इति व्यवहार इत्यत आह–तदना दृत्यैवेति। तत तारतम्यम्, नादृत्य अविवक्षित्वेति। तृतीयं पक्षं दूषयति–न तु व्यासक्तवृत्तिरिति। अनतिशयो यद्यतिशयविरोधिनी जातिरेव तर्हि सङ्करात्तयोरेकत्रानुपपत्तिः। अथातिशयत्वजातेरभावोऽनतिशयस्तथापि भावाभावयोरेकत्रानुपपत्तिरेवेति। इदं चाचार्येण यथानुभवमभिहितम्। अनुभवे विप्रतिपद्यमानस्त्वनुमानेन बोधनीयः। तत्रानेकपृथक्त्वे तावत् आकाशं संख्यात्वानधिकरणात्मगुणाधिकरणं द्रव्यत्वात् घटवदित्यनुमानं, द्विपृथक्त्वे त्वाकाशमाकाशनिष्ठसंयोगत्वाविभागत्वसंख्यात्वानधिकरणत्रिनिष्ठत्वानधिकरणद्विष्ठगुणाधिकरणं द्रव्यत्वात् घटवत्। एवं त्रिपृथक्त्वाद्यप्यूहनीयम्। द्विपरत्वप्रतिबन्दिनिरासस्तु साधकमानाभावादेव। न च परत्वजातिरनेकसमवेतसमवेता परत्वजातित्वात् सत्तावत्, एवं परत्वजातिरुभयमात्रवृत्तिसमवेता परत्वजातित्वात् सत्तावदित्यादिनाऽनेकपरत्वद्विपरत्वादिसिद्धिरिति वाच्यम्। परत्वानधिकरणवृत्तित्वेन सोपाधित्वात्। तन्निषेधे तु प्रमाणं परत्वं नानेकवृत्तिवृत्ति द्रव्यावृत्त्याकाशवृत्त्यवृत्तित्वात् रूपत्ववदिति। न चात्र परत्वावृत्तित्वमुपाधिः उभयसिद्धैकपरत्वमात्रवृत्तिजातौ साध्यव्यापकत्वभङ्गात्। न चैकपरत्वमात्रवृत्तित्वानाधिकरणपरत्ववृत्तित्वाभाव उपाधिः,साधनव्यापकत्वादिति। जातिसङ्कर इति(पृ.२२०)।



द्वित्वत्रित्वादिजातीनां पृथक्त्वजात्या सङ्करो द्रष्टव्यः। "एकपृथक्त्वाद्यपरसामान्याभावः" इति भाष्यमेकत्वादिसामान्यमेव पृथक्त्ववर्तिशङ्क्यमानमेकपृथक्त्वादीत्युक्तमिति व्याख्येयम्। पृथक्त्वाधिकरणप्रत्याय्यव्यावृत्तिसमानाधिकरणत्वाभावात् द्वित्वादीनां द्विपृथक्त्वविशेषणत्वानुपपत्तेः। "संख्यया तु विशिष्यते" इत्यन्यथा व्याचष्ट–विशिष्यते उपलक्ष्यत इति। ननु यदि द्वित्वत्रित्वादिजातयो न पृथक्त्वे तर्हि किञ्चित् पृथक्त्वं द्वाभ्यामारभ्यते किञ्चित्त्रिभिरिति न स्यात् कार्यवैषम्यमन्तरेण कारणवैषम्यानुपपत्तेरित्यत आह—कारणविशेषात्प्रकर्षनिकर्षलक्षणविशेषस्त्वस्त्येवेति। एवकारेण द्वित्वत्रित्वादिजातिनिषेधः। यद्वा, "एतावांस्तु विशेषः" इत्यादि भाष्यं पृथक्त्वावान्तरसामान्यनिषेधपरतया किं न व्याख्यातमन्यैरित्वेत्यत आह—कारणविशेषादिति॥

ननु पूर्वद्रव्यादन्यदेव समर्थमुत्पन्नं पूर्वमेव वा समर्थात्मना परिणतं द्रव्यादीनारप्स्यते, किं संयोगेनेत्यत आह—क्षणभङ्गेति। परिमाणवादनिरासस्तादात्म्यभङ्गेऽस्त्वदृष्टमेवागन्तुकं किं संयोगेनेति शङ्कते—अदृष्टादिति (पृ. २२१)। अदृष्टसंपादकप्रयत्नेऽप्यदृष्टान्तरमेव हेतुरस्तु किं संयोगेनेत्यत आह—अदृष्टान्तरेति। संयोग आत्मलाभार्थं कर्मापेक्षत इति कथमनपेक्ष इत्यत आह—द्रव्ये तदवयवा इति। सहकारिनय। न किञ्चिदपेक्षते इति। अत्र स्वोत्पादकातिरिक्तमिति शेषः। अन्यथा अवयवसंयोगस्य द्रव्यारम्भेऽवयवादिसहकारिसापेक्षत्वान्निरपेक्षत्वव्याकोपादिति। 'एतेन चरमभावि' इत्यादि परमतम्। ये तु 'गुणकर्मारम्भे सा-

पेक्षः' इति स्वोत्पत्त्यनन्तरभाविकारणापेक्ष इति व्याचक्षते; तान्प्रत्याह—**अपेक्षणीयस्येति** [पृ. २२२]। पाकजारम्भे वह्निसंयोगापेक्षणीयस्योष्णस्य स्पर्शस्य महत्त्वारम्भे प्रशिथिलसंयोगापेक्षणीयस्वाश्रयावयवप्रशिथिलसंयोगस्य कर्मारम्भेऽभिघातनोदनापेक्षणीयस्पर्शवेगादेश्च परमभावित्वाभावादिति। ननु यथा संयुक्तप्रतीतिः संयोगे प्रमाणमेवमितरव्यवच्छेदकत्वाल्लक्षणमपि, ततः संयोगः संयुक्तप्रत्ययनिमित्तमित्यनेनैव लक्षणसिद्धेः अथ कथं लक्षणमिति प्रश्नोऽनुपपन्न इत्यत आह—**प्रत्येतव्यस्येति**। पदमग्रे गच्छतः पृष्ठतो धावता संयोगोऽन्यतरकर्मज एवाग्रेसरकर्मणः पुरोदेशाभिमुखत्वेन पृष्ठदेशावस्थितेन संयोगानारम्भकत्वात्। तन्न युक्तं क्रियावता निश्चलस्येति अत आह—**तदभिमुखेति** [पृ. २२३]। विभूनां मूर्तैरवयविभिरवयवसंयोगजसंयोगदर्शनात् किमुच्यते विभूनां मूर्तैरित्यत आह—**अवयविभिरिति**। संयोगान्तरस्यैकस्माद् द्वाभ्यां बहुभ्यश्चानुदयात्। **स चेति**। चकारः समुच्चये न घटत इत्यन्यथा व्याचष्ट—**चशब्द इति**। **अनारम्भकत्वमभिप्रैतीति**(पृ.२२४)। अत्रारम्भकत्वे हि ताभ्यामेकद्व्यणुकारम्भे मूर्तानां समानदेशत्वानुपपत्तेः। अन्यपरमाणुद्वयसंयुक्ताभ्यामन्यद्व्यणुकद्वयानुत्पादे तद्गतसंयोगद्वयानुपपत्तिरिति भावः। अणुशब्देन द्व्यणुकविवक्षायामन्याऽणुद्वयसंयुक्ताभ्यां ताभ्यां द्व्यणुकोत्पत्तिव्युत्पादनं न घटत इति अन्यथा व्याचष्ट—**अण्वोरिति**। ननु परस्परसंयुक्तयोः पार्थिवाप्ययोरण्वोः क्रमेणाप्यन्यपार्थिवाप्यपरमाणुभ्यां संयोगौ भवतः तथापि द्व्यणुकद्वयपूर्वकं संयोगद्वयमेकस्मात् संयोगाद् घटत इति किमर्थं युगपद्ग्रहणमत आह—**संयोगयोगपद्येनेति**। कारणसंयोगि-



नाप्यवयवान्तरेणावयवी न संयुज्यत इति पूरयति—**अकारणेनेति शेष इति** (पृ. २२५)। **यद्यदकार्यत्वे सतीति**। यद्यदविनश्यदवस्थकार्यत्वे सतीति विशेषणीयम्। अन्यथा विनश्यदवस्थतुरीसंयुक्ततन्तुकार्येण पटेन व्यभिचारात्। **उक्ततर्कसिद्धये** परमाणुद्व्यणुकयोः संयोगाभावे द्व्यणुकयोः संयोगो न स्यादित्यस्य सिद्धये। न च द्व्यणुकयोः संयोगाभावः। विमते द्व्यणुके संयुक्ते संयुक्तोपादानत्वात् घटपटवदित्यनुमानात्। **तस्मिन् काल इति** [पृ. २२६] द्व्यणुकपरमाणुसंयोगानुत्पत्तिकाले इत्यर्थः। अथ परमाण्वोः संयोगो द्व्यणुकपरमाणुसंयोगावारभ्य परस्परकारणसंयुक्तद्व्यणुकयोः संयोगं कुतो नारभत इत्यपि न युक्तम्। परमाण्वोः संयोगस्य द्व्यणुकपरमाणुसंयोगविपक्षत्वे पूर्वमेव द्व्यणुकयोः संयोगापत्तेः। द्व्यणुकपरमाणुसंयोगसापेक्षत्वे तत एव द्व्यणुकयोः संयोगोपपत्तेः परमाण्वोः संयोगस्याकारणत्वस्थितेः। **संयोगो हीति**। **विभागमनुत्पाद्येति**। उत्पाद्यविभागाभावोपदर्शनं विरोध्यभावेन संयोगारभ्यसंयोगस्य विभागाविरोधित्वोपपादनार्थम्। अनुत्पाद्येति उत्पाद्यविभागदर्शनं कर्मजन्यसंयोगस्य विभागाविरोधित्वोपपादनार्थम्। **ततो विरोधादिति**(पृ.२२७)। एकस्य संयोगरूपकार्यस्य विरोधित्वाविरोधित्वलक्षणविरोधप्रसङ्ग इत्यर्थः। **त्रैविध्यमेवेति** एवकारेण कर्मसंयोगाभ्यामारब्धस्य संयोगान्तरस्य व्युदासः। **अन्वयव्यतिरेकाविति**। अन्वयव्यतिरेकसहितं प्रत्यक्षमित्यर्थः। **विभागं न सहन्त इति**। स तु विभाग इति विविधं भागम्। **यथाश्रुत इति**। अजसंयोगं पक्षीकृत्य नास्तित्वं साध्यत इत्यर्थः। संयोगे धर्मिण्यजत्वाभावः साध्यत इति पक्षेऽपि किमन्यतरकर्मजा-

दिस्त्रिविधः संयोगो धर्मी संयोगान्तरं वा ? आद्ये साधनवैयर्थ्यमित्याह—**त्रिविध इति** । **किमधिकमिति** । द्वितीयं दूषयति—**तदतिरिक्तस्येति** । ननु प्रदेशोऽवयवः स च आकाशादीनां नास्तीति कथं तेषु प्रदेशवृत्तिः संयोग इत्यत आह - **प्रदेशश्चोपाधिभेद एवेति** (पृ.२२८) । **मूर्तेनेति** स्वरूपकथनम् । संयोगित्वादित्येव हेतुः व्यभिचाराभावादिति कालादयो द्रव्यसंयोगिनश्च भवन्ति । न च कालादिना संयुज्यत इति व्यभिचार इति कुचोद्यमेव । **कालादिना संयुज्यत इति** । कालादिनिष्ठसंयोगाधिकरणत्वं साध्यं, तच्च कालादावप्यस्ति । न हि कालनिष्ठः संयोगः काले न वर्त्तते व्याघातादिति न तेन व्यभिचारः । न च कालादिना संयोगे क्रियावत्त्वमुपाधिः । अनुत्पन्नक्रियस्य क्रियाऽभावेऽपि कालसंयोगदर्शनेन साध्याव्यापकत्वात् । न च कालसंयोगित्वे मूर्तत्वमुपाधिः मूर्तत्वं नामेयत्तावच्छिन्नपरिमाणत्वम् । न चेयत्ताविशेषणस्य विपक्षरूपं व्यावर्त्यमस्ति गुणादेर्विपक्षस्य परिमाणवत्त्वेनैव व्यावर्तितत्वात् । तस्मात्पक्षेतरत्वान्नायमुपाधिरिति । **आपातत इति** । अनुकूलतर्कत्वादिना विशेषग्रहणात्प्रागित्यर्थः । संयोगव्यापकत्वे हि युतसिद्धेः सिद्धे व्यापकाभावत्वाद् युतसिद्धिराहित्यं संयोगाभावं साधयत् प्रतिपक्षः स्यात् । तदेव त्वसिद्धं युतसिद्धयोरजसंयोगसाधनप्रमाणबलेन यत्र संयोगस्तत्र युतसिद्धिरिति व्याप्तेर्भङ्गात् कार्यसंयोगविषयत्वेन वा संकोचादित्यभिप्रायेण शङ्कते—**संयोगगतेति** । अनुकूलविरहाद् द्रव्यत्वादयो न संयोगं गमयन्ति, अनुकूलस्य चानङ्गत्वे विभागमपि गमयेयुरिति समाधत्ते—**न संयोगसाधकस्येति** । यद्वा, यत्र विभागस्तत्र युतसिद्धिरिति व्याप्तेः



पूर्ववद्भङ्गात्संकोचाद्वा । नित्यसंयोगवन्नित्यविभागोऽपि तत एव स्यादित्याह—**न संयोगसाधकस्येति** । अजो विभागो न संयोगविघातकः तेन संयोगाजत्वव्याघाताभावात् । द्रव्यत्वादेः संयोगसाधकत्ववद्विभागसाधकत्वमपीष्टमेवेति कथं विभागसाधकत्वानिष्टापत्तिबलेनानुकूलतर्कस्याङ्गत्वासिद्धिरित्याशयवान् शङ्कते—**अजयोरिति** [पृ. २२९] । सिद्धान्तमुल्लङ्घ्य नित्यविभागमभ्युपगच्छन्तं प्रत्यनुकूलतर्कस्याङ्गत्वमग्रे व्युत्पादयिष्यते इति तदभावस्य दोषत्वं स्फुटमेवेत्युपेक्ष्याजसंयोगविभागवत्साधनस्य तर्कपराहतिमाह—**न तथात्व इति** । तथात्वे संयोगविभागयोर्नित्यत्वे । **सतर्कतयेति** । य एव विभुसंयोगसाधनप्रतिकूलः स एव तदभावसाधकव्यापकानुपलब्धेरनुकूल इत्यर्थः । विभुनोः समवायसिद्धौ प्रयुक्तस्यायुतसिद्धत्वस्यासिद्धत्वमुपपादयितुं साधारणयुतसिद्धिलक्षणमाह—**उभयसाधारणमिति** । **तत् कथं न संयोग इति** । कथं न जायत इति विवक्षितम् । संयोगाभावसाधकयुतसिद्धिराहित्यासिद्धेः कथं संयोगो नास्तीति वा ? प्रथमे दूषणम्—**अस्त्येवेति** । द्वितीये दूषणं—**विशेषाविति** । युतसिद्धिविशेषौ लक्ष्यावुपादाय द्वयोरन्यतरस्य वेति लक्षणाचिन्ता संयोगव्यापकयुतसिद्धिविशेषद्वयनिवृत्त्या संयोगाभावसाधनायेत्यर्थः । तेन युतसिद्धिविशेषद्वयाभावः संयोगाभावे मानम्, स च प्रकृते न सिद्ध इत्यर्थः । एवं तर्हि संयोगव्यापकयुतसिद्धिविशेषद्वयनिवृत्तिरूपैवायुतसिद्धिः समवाये मानमस्त्विति शङ्कते—**अथेति** । समवायिनोराधाराधेयभावनियामकः कार्यकारणभावः, तेन तदभावे आधाराधेयभावनियमो न स्यात् । समवायवतोश्चाधाराधेयभाव आवश्यक इति ।

किं विभक्तप्रत्यये ध्वंसवद् द्वित्वं विषय इति तेनानुविधीयते आहोस्वित् अविषयभूतमप्यस्तित्वमात्रेण ? प्रथमं दूषयति—नप्रमेयेति (पृ. २३१) । द्वित्वस्य विभक्तप्रत्ययालम्बनत्वे द्वौ विभक्तौ इति बुद्धिव्यपदेशपौनरुक्त्यापत्तेरिति भावः । द्वितीयं दूषयति—घटत्वेति । **अवयवविश्लेषविनाशाविति** । अवयवसंयोगनाशावयवनाशावित्यर्थः । **अतिप्रसङ्गादिति** । क्लृप्तसामर्थ्ययोरवयवनाशावयवसंयोगनाशयोरभावेऽपि द्रव्यनाशोत्पादे तन्त्वाद्यभावेऽपि पटाद्युत्पत्तिप्रसङ्गादित्यर्थः । यद्वा, यत्किञ्चिद्द्रव्यसंयोगाद् यस्य कस्यापि द्रव्यस्य नाशे कुम्भादिना संयोगात्पटस्यापि नाशप्रसङ्ग इति । यथा ऽवयविभूताद् द्रव्यादिसंयोगात् द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकं कर्म भवतां, तथाभूतादेवास्माकं द्रव्यनाश इति नातिप्रसङ्ग इति चेत् । न, क्लृप्तसामर्थ्यावयवनाशावयवसंयोगनाशयोर्दहनाभिघातप्रभवकर्मादिजन्मनोर्बाधमन्तरेण वह्न्यभिघातादेर्द्रव्यनाशहेतुत्वे निष्प्रमाणकानियतहेतुकतापत्तेः । अथावयवनाशस्थलेऽपि तत्पूर्वकावयवसंयोगनाशस्यैव द्रव्यनाशहेतुत्वे सम्भाविनि अवयवनाशस्यापि द्रव्यनाशहेतुत्वेऽनियतहेतुत्वं कथं निराकरणीयमिति चेत् । न, आश्रयनाशस्याश्रितनाशचरमकारणत्वाभावेऽवयवनाशात्तदाश्रितसंयोगविनाशस्यैवानुपपत्तेः । आश्रयनाशस्याश्रितनाशचरमकारणत्वे चावयवसंयोगनाशसमसमयमेवावयविविनाशात् तत्रावयवसंयोगनाशस्यानाशकत्वस्थितेः । **व्यधिकरणत्वादिति** (पृ. २३२) । अत्र हस्ततरुसंयोगादिनेति शेषः । व्यधिकरणमप्यङ्गुलिकर्म शरीरतरुसंयोगनाशकमस्तु, न चातिप्रसङ्गः स्वाश्रयाश्रितावयविपरम्परासमवेतसंयोगं प्रत्येव कर्मणो विनाशकत्वस्वीकारादिति



चेत् । न, विरोधिनः समानाधिकरणस्यैव विनाशहेतुत्वमिति सामान्यप्रवृत्तकार्यकारणभावस्य बाधकं विना विशेषनिष्ठविरोधात् । अन्यथा वह्नेर्धूमविशेष एव हेतुत्वोपपत्तेरिति । नन्वस्तु कारणभूताङ्गुलितरुसंयोगनाशो हस्ततरुसंयोगनाशकः, न चातिप्रसङ्गः, अवयवसंयोगनाशस्यावयविसंयोगनाशं प्रत्येव विनाशकत्वस्वीकारात्, तन्न युक्तमकारणनाशस्येत्यादि, इति चेत् । न, विरुद्धधर्माजन्यविनाशेऽन्वयव्यतिरेकाभ्यां हेतुनाशो विनाशक इति निर्णयादिति । **शब्दसन्तान इति** । मूलभूतः शब्दो विवक्षितः । द्वितीयशब्दादौ विवादाभावात् । संयोगाद्यतिरिक्तेत्यादिशब्देन शब्दमात्रविवक्षायामयमन्वयीति दर्शयति । **विरूपवादिति**(पृ. २३३) । यदा तु संयोगादीत्यादिपदेनोभयवादिसिद्धमसमवायिकारणमात्रं विवक्षितं तदाऽयं व्यतिरेकीति दर्शयति—यद्वेति । **सर्वं चैतदनुपपन्नमिति** । अत्र विभागस्य संयोगेन देशकालकृते विरोधे एकदैकत्रासत्त्वेन संयोगनाशकत्वानुपपत्तेः, स्वरूपकृते च विरोधे निषेध्यनिषेधत्वलक्षणे भावत्वाभावापत्तेरिति शेषः । **अभिप्रेतामिति** (पृ. २३४) । अत्र तथा च द्वितीयविभागस्यापि कर्मारभ्यत्वे विभागजविभागासिद्धिरिति शेषः । ननु द्वितीयविभागारम्भे कर्मणो द्रव्यं प्रतिबन्धकं तेन तदभावमपेक्ष्य विभागवत् कर्मापि अन्यदा द्वितीयं विभागमारभत इति संभवतीत्यत आह—**विभागे कर्तव्य इति** । यत्कर्म द्रव्यानारम्भकसंयोगविरोधिनं विभागमारभते न तद्द्रव्यारम्भकसंयोगविरोधिनमिति व्याप्तिः प्रसङ्गसिध्द्यर्थं दर्शिता, प्रसङ्गविपर्ययनिदानव्याप्तिसिद्ध्यर्थं च कर्मत्वे सति द्रव्यानारम्भकसंयोगविरोधिविभागजनकव्यापकत्वे द्रव्यारम्भकसंयोगविरोधिविभागानारम्भकत्वस्य सिद्धेर्द्रव्यारम्भकसंयो-

गविरोधिविभागारम्भकत्वस्य कर्मत्वे सति द्रव्यानारम्भकसंयोगविरोधिविभागजनकत्वाभावेन व्याप्तिः सिद्ध्यति । व्यापकाभावस्य व्याप्याभावव्यभिचारस्थल एव व्याप्यव्यापकभावस्यैव भङ्गादिति । द्रव्यानारम्भकसंयोगविरोधिविभागजनकोऽपि समवायिकारणतया तन्त्वादिनिमिततया चेश्वरादिद्रव्यारम्भकसंयोगविरोधिनं विभागं जनयतीति यत्कर्मेति विशेषितम् । प्रसङ्गविपर्ययमूलभूतां व्याप्तिमाह—**यत्त्वेवमिति**(पृ.२३५) । एवमिति द्रव्यारम्भकसंयोगविरोधिविभागजनकमित्यर्थः । **न तदिति** । अत्र कर्मत्वे सतीति शेषः । **अविरोधिनमिति** । अत्र विभागमारभत इत्यनुषज्यते । व्याप्तिग्रहणोपायभूयोदर्शनस्थलमाह—**विकसदिति** । **दलादाविति** । दलादिसमवेते कर्मणीत्यर्थः । द्वितीयव्याप्तेस्तन्त्वादय एव वाऽऽदिपदोपात्ताः सपक्षतयोदाहरणीयाः । प्रथमव्याप्तिरेव वा द्वितीयव्याप्तौ लिङ्गमित्युक्तम् । सत्यपि भूयः साहित्यदर्शने प्रकृतसाध्यसाधनयोर्व्यभिचारोऽस्तु विपक्षे बाधकाभावादत आह—**कार्येति** । कार्ययोर्विपर्ययः कार्ययोर्विरुद्धता यद्यनारम्भकात्तन्त्वन्तरात्तन्त्वोर्विभागारम्भकं कर्मारम्भकतन्त्वन्तरात्तन्त्वोर्विभागारम्भककर्मणा न विजातीयं तर्ह्युभयमपि द्रव्यारम्भकसंयोगविरोधिनमविरोधिनं च विभागं जनयेत् तदतिरिक्ततन्त्वदृष्टादिहेतुनाऽपि साधारणत्वेन सामग्रीभेदविरहात् । कथं तर्हि तुल्यजातीयात्कर्मणः संयोगविभागावित्यपि न युक्तम् । संयोगे पूर्वसंयोगनिवृत्तेर्विभागे पूर्वसंयोगस्यैवासाधारणहेतोः सामग्रीभेदापादकस्य सत्त्वात् । अन्यथा तयोरप्यैक्यस्य दुर्वारत्वात् । तस्माद् द्रव्यारम्भकसंयोगविरोधिद्रव्यानारम्भकसंयोगविरोधिविभागरूपकार्योत्पादक-



सामग्रीभेदसिद्धये विभागद्वयारम्भककर्मणः परस्परव्यावृत्तं जातिद्वयमङ्गीकरणीयम् । एवं च सति यदि द्रव्यानारम्भकसंयोगविरोधिविभागारम्भकं कर्म क्वचिद्द्रव्यारम्भकसंयोगविरोधिनं विभागं जनयेत्, यदि च द्रव्यारम्भकसंयोगविरोधिविभागारम्भकं कर्म क्वचिद् द्रव्यानारम्भकसंयोगविरोधिनं विभागं जनयेत् , तर्हि द्रव्यानारम्भकसंयोगविरोधिद्रव्यारम्भकसंयोगविरोधिविभागारम्भकं कर्म गतयोः परस्परपरिहारवत्योरेकत्र समावेशप्रसङ्ग इति व्याप्तिद्वयोपयोगितर्कद्वयं सिध्यति । अथ तन्त्वादावेव द्रव्यानारम्भकसंयोगविरोधिद्रव्यारम्भकसंयोगविरोधिविभागद्वयसिद्धये वैजात्यं किं न कल्प्यत इति तु न वाच्यमेव एकस्यैव तन्त्वादेर्द्रव्यानारम्भकसंयोगविरोधिद्रव्यारम्भकसंयोगविरोधिविभागारम्भकत्वेनोभयजातिमत्त्वास्थितौ ततः सर्वदोभयात्मकविभागोदयप्रसङ्गादिति, तदाह—**न हीति** । **अविरुद्धजातीयं चेति** । अत्र समग्रमिति शेषः । आद्यव्याप्तेः फलं प्रसङ्गमाह—**तदिहेति** । द्वितीयव्याप्तेः फलं प्रसङ्गविपर्ययमाह—**जनयति चेति** । प्रसङ्गविपर्ययादि चोत्तरभाष्यप्रतिपाद्यमविशिष्यापतितयाऽत्र दर्शितम् । प्रयोगस्तु द्रव्यारम्भकसंयोगविरोधिविभागारम्भकं कर्म न कर्मत्वे सति द्रव्यानारम्भकसंयोगविरोधिविभागजनकं द्रव्यसंयोगविरोधिविभागारम्भकत्वात् तादृक्तन्तुवदिति । न च द्रव्यारम्भकसंयोगाविरोधिविभागारम्भकं कर्म द्रव्यानारम्भकसंयोगविरोधिविभागजनकं कर्मत्वात् पद्मपत्रोन्मीलनकर्मवदित्यादिना सत्प्रतिपक्षत्वम् । अनुकूलविरहोक्तिप्रतिकूलतर्कपराहतिभ्यामेवमादेः पूर्वस्माद् दुर्बलत्वादिति । **यथा विकासितकमलदलसम्मीलनकर्मेति** । अत्र तदिहारम्भकसंयोगा-

रम्भकं कर्म यथा आकाशादिना द्रव्यानारम्भकसंयोगं जनयेत् तर्हि द्रव्यारम्भकसंयोगं जनयेत्। जनयति च, तेन द्रव्यानारम्भकसंयोगं जनयतीत्याद्यनुसंधेयम्। नन्वेकः संयोग आरम्भकोऽनारम्भकश्चान्यस्मात् कथं स्वरूपतो विरोधाभाव इत्यत आह—**अनारम्भकेति। नतु स्वरूप इति।** अत्र तथा च यदनारम्भकसंयोगजनकं कर्मेति यदनारम्भकद्रव्यसमवेतं कर्मेति फलतीति शेषः। **त्रिविधमिति** उपलक्षणं स्पर्शरहितविनश्यदवस्थसंयोगनिष्फलारम्भाणामप्यनारम्भकत्वात्। न हि मनोद्वयं विनश्यदवस्थतन्तुद्वयं विनश्यदवस्थसंयोगं तन्तुद्वयं द्व्यणुकद्वयं चारम्भकमिति। तस्मादारब्धद्रव्यमन्त्यावयविविजातीयं स्पर्शरहितं विनश्यदवस्थं विनश्यदवस्थसंयोगं निष्फलारम्भं चेति सप्तविधं प्रथममनारम्भकमिति द्रष्टव्यम्। न चैवंभूते वर्तमानं कर्मैवंभूतेनैवेति विजातीयेनारम्भके वर्तमानं विजातीयेनैवान्त्यावयविन्यनारम्भके वर्तमानमन्त्यावयविनैवारब्धे द्रव्ये चानारम्भके वर्तमानमारब्धद्रव्येणैव संयोगमारभते इति च नियम इत्यर्थः। **अनेवंभूतेन वेति।** वाशब्द इवार्थे। विजातीये वर्तमानं कर्म विजातीयेनैव संयोगमारभते इति नियमभङ्गमाह—पृथिव्यामिति। पृथिव्यन्तरपाथःपदयोः स्थानव्यत्यासो वत्यपिशब्दव्यत्यासश्च द्रष्टव्यः। तेन पाथोवत् पृथिव्यन्तरेणापि संयोगजननादिति द्रष्टव्यम्। अन्यथा प्रकृतानुपयोगादिति। अन्त्यावयविकर्मान्त्यावयविनैव संयोगमारभत इत्यस्य व्यभिचारमुदाहरति—स्थाणुवर्तिनेति। आरब्धं द्रव्यगतकर्मारब्धद्रव्येणैव संयोगमारभते इत्यत्रापि व्यभिचारमाह—कमलदलेति। विभागे तु स्वभावविरोधादिति। न हि द्रव्यार-



रम्भकसंयोगविरोधित्वे विभागस्यारब्धद्रव्यसमवेतत्वं प्रयोजकम्। पद्मदलोन्मीलनकर्मजविभागस्यापि तथात्वप्रसङ्गात्। नापि द्रव्यानारम्भकसंयोगविरोधित्वं विभागस्यानारम्भकद्रव्यसमवेतत्वं प्रयोजकम्। आरब्धद्रव्यतयाऽऽरम्भकपद्मदलसमवेतद्रव्यारम्भकसंयोगविरोधिनोऽपि विभागस्य द्रव्यानारम्भकसंयोगविरोधित्वप्रसङ्गात्। तस्माद् द्रव्यारम्भकसंयोगतदनारम्भकसंयोगविरोधिनो विभागः स्वरूपेणेवेति तयोर्विरोध इति तज्जनककर्मवैचित्र्यसिद्धिरिति व्यभिचारं दर्शयति—उत्तरेति (पृ. २३६)। ननु यस्मिन्परमाणौ क्रियोत्पन्ना तत्रैव कारणयोर्वर्तमानो विभागमाकाशेनारभते न तु द्वितीयपरमाणाविति कुत इति शङ्कापरिहारत्वेन "न निष्क्रियस्य कारणाभावात्" इति भाष्यं कारणविभागेन विभागमारभतो निमित्तकारणत्वेनापेक्षणीयस्य कर्मणोऽभावादिति श्रीधराचार्यादिभिर्व्याख्यातं, तदयुक्तम्। द्रव्यारम्भकसंयोगविरोधिविभागारम्भकस्य कर्मणो द्रव्यानारम्भकत्वं स्वोत्पत्त्युत्तरक्षणे एव विभागारम्भकत्वेन व्याप्तम्। अत उत्तरविभागं प्रति स्वोत्पत्त्युत्तरक्षण एवारम्भकत्वं प्रकृतात्कर्मणो व्यावर्तमानं तस्यासमवायितया द्वितीयविभागारम्भकत्वं निवर्तयतीति कारणविभागस्यासमवायिकारणत्वसिद्धिरिति चेत्। न, कर्मणो विभागारम्भकत्वमात्रस्य स्वोत्पत्त्यनन्तरमेव विभागारम्भकत्वेन व्यभिचाराभावेनासमवायिकारणत्वेन विशेषणानुपपत्तेः। असमवायिकारणत्वस्य च क्वचिदप्रसिद्धौ तस्य व्याप्यांशे विनिवेशो व्यापकनिवृत्त्या च तन्निवृत्तिरशक्या। अवधृतसामर्थ्यत्वादिना क्वचिदसमवायिकारणत्वसिद्धौ तु तेनैव न्यायेन द्वितीयविभागेऽपि कर्मणोऽसमवायिकारणत्वसिद्धेर्बाधः। अवधृतसामर्थ्यमपि नेदं

प्रत्यासत्त्युपधानेनावधृतसामर्थ्यमिति चेत्। न, प्रत्यासत्तेरनुपाधित्वे सक्रियपरमाणुकर्मसापेक्षात् कारणविभागान्निष्क्रियेऽपि विभागोदयस्य भवतामपि दुर्वारत्वात्। कर्मणो विभागारम्भकत्वं स्वोत्पत्त्यनन्तरमेव विभागारम्भकत्वेन व्याप्तं तन्निवृत्तौ निवर्तेत इत्यादिना कारणत्वमात्रप्रतिक्षेपाच्च, अनुकूलविरहस्यासमवायिकारणत्वप्रतिक्षेपेऽपि तुल्यत्वात्। अथाकर्मणो निमित्तत्वे निष्क्रियस्यापि कारणविभागाद् विभागः स्यादिति चेत्। सत्यं, भवत्येव। हेतुसाकल्याद् विभागात् निष्क्रियस्यापि पूर्वसंयोगनिवृत्तिः स्यात् इति चेत्। सत्यं, भवत्येव। उत्तरसंयोगोऽपि तर्हि स्यादिति चेत्। न, तद्धेतुकर्माभावात्। उत्तरसंयोगानुपपत्तौ विभागस्य कुतो नाश इति चेत्। आशुविनाशित्वे विभागस्य निमित्तकारणनाशान्नाश ईश्वरापेक्षाबुद्धिजन्यपरमाणुद्वित्वस्येव, कालान्तराविनाशित्वे तु कालान्तरोत्पन्नकर्मजन्योत्तरसंयोगादिति यो विभागो नासौ निमित्तकारणादृष्टनाशनश्यः, यश्च संयोगो यस्य विभागस्य नाशको स तद्विभागजनककर्मजन्य इत्यादेरनुकूलतर्कविरहेणाप्रयोजकत्वादिति। पूर्वसंयोगनाशे उत्तरसंयोगोत्पत्तौ चाकाशादिना संयुक्तः परमाणुः कथमवतिष्ठेत? कथं च सर्वमूर्तसंयोगित्वलक्षणमाकाशादेः सर्वगतत्वम्? इति चेत्। पूर्वसंयोगनिवृत्तिलक्षणप्रलयावस्थयोरिवेति मूकीभव। तस्मादनुपपन्नमिदं भाष्यव्याख्यानमिति मन्वानो यदि द्वितीयविभागो न कर्मजस्तर्हि कर्मनिवृत्तौ सत्यां स्यात् न तु कर्मण्यनुवर्तमान इति शङ्कापरिहारत्वेन प्रकृतानुवादपूर्वकं भाष्यमवतारयति—सक्रियेत्यादिना (पृ.२३७)। क्रियानिवृत्तौ कारणं नास्तीति क्रियानिवृत्तिरवर्जनीयतया न हेतुतयेत्यर्थः। नन्वस्तु विभाग एव



क्रियानिवर्तकः किमुत्तरसंयोगेन तत्कथं पूर्वक्रियानिवृत्तौ हेत्वभाव इत्याशङ्कापरिहारत्वेन कारणाभावादिति व्याख्यातम्। एवं भाष्यमुत्तरसंयोगानुत्पत्तावित्यादिनैकं वाक्यं कृत्वा पुनरवतारयति—यदि वेति(पृ. २३८)। ननु विभागेनैव सफलत्वात् कथं कर्मणोऽनुपयोग्यत्वमत आह—उत्तरसंयोगेति। यद्युत्तरसंयोगः क्रियाफलं न स्यात् ततो हेत्वन्तराभावान्न स्यादेव। विभागाद्भविष्यतीति चेत्। न, सक्रियवन्निष्क्रियेऽपि तन्त्वादौ उत्तरसंयोगापत्तेर्हेतुसाकल्यात्। तथा च निष्क्रियस्यापि तन्तोः समीपवर्तितन्त्वन्तरसंयोगात्तदारब्धद्वितन्तुकयोरुपलम्भापत्तिरिति भावः। यद्यपि द्रव्यारम्भकसंयोगविरोधिविभागारम्भकस्य कर्मणो द्रव्यानारम्भकसंयोगविरोधिविभागारम्भकत्वं निरस्तमेव तथापि बाधकान्तरमवतारयितुं तदेव शङ्कते—यद्येवमेतावन्तामिति। अपेक्षाकारणमुक्तमित्यत्र तेन कारणाकारणविभागे विभागानपेक्षकारणं कर्मेति लक्षणं नातिव्यापकमिति भावः। युतसिद्धिरिति[पृ. २३९]। किमवयवे चलत्यपि अवयविनोऽचलनं विभज्यमानेऽप्यविभागो वा संयुज्यमानेऽप्यसंयोगो मिथोविभागो वाऽसमवायो वेत्यर्थः। आद्ये पक्षत्रये दूषणमाह—न तावदिति[पृ.२४०]। यदि चलाचलत्वेन चलाचलत्वं विभज्यमानत्वाऽविभज्यमानत्वेन विभज्यमानत्वाविभज्यमानत्वं संयुज्यमानत्वासंयुज्यमानत्वेन च संयुज्यमानत्वाऽसंयुज्यमानत्वमापद्यते तत्रादोषः। तेनैव तदापादनेति। अथ चलाचलत्वेन विभज्यमानत्वाविभज्यमानत्वादि विभज्यमानाविभज्यमानत्वादिना चलाचलत्वादिकमापद्यते तत्र दोषः—अस्यार्थस्येति। चतुर्थपञ्चमपक्षयोः किमयं युतसिद्धिप्रसङ्गोऽविपर्ययपर्यवसितो वास्तवमिथोविभागित्वं संयोगित्वं तेन च-

लाचलत्वादिकमपि नास्तीति किं वा युतसिद्धिपर्यवसितः चलाचलत्वादेर्मिथोविभागित्वं संयोगित्वं च वाऽस्तीति ? तत्र प्रथमवत्पक्षोऽनुपपन्नः । अवयवचलाचलत्वादिसत्त्वेऽप्यवयविचलाचलत्वग्राहकप्रमाणेन यथास्थानोपपादितेन प्रसङ्गविपर्ययस्य बाधादिति मन्वानो द्वितीयपक्षे मिथोविभागित्वे साधने तद्व्यापकसंयोगित्वाभावेन बाधः संयोगित्वेन सोपाधिकत्वमित्याह—**नाप्यवयवेति** । संयोगित्वसाधने तु तद्व्यापकाप्राप्तिविरहेण वा बाधः प्राप्त्या सोपाधित्वं चेत्याह—**नापि संयोगित्वमिति** । एतेन यत्केनचिदुक्तं संयोगे बाधाद्यभिधानमयुक्तं प्रमिताभावापादनस्यैव प्रसङ्गत्वादिति, तत् परिहृतम् । प्रसङ्गसाधनमिदं युतसिद्धौ साधनमिति पक्षे दोषाभिधानादिति । षष्ठे पक्षे दूषणमाह—**नाप्यसमवाय एवेति** । तत्र हेतुमाह—**गुणादावपीति** । यद् यस्मिन् चलति न चलति, यस्मिन् संयुज्यमाने यन्न संयुज्यते, यस्मिन्विभज्यमाने यन्न विभज्यते, तयोरसमवाय एवेति नियमः, तर्हि द्रव्ये चलनादिमत्यपि गुणादेरचलनात् तयोरसमवायप्रसङ्गः। अन्यथा तु मूलशैथिल्यात् । अवयवावयविनोः समवायाभावापादनं प्रसङ्गाभास इत्यर्थः । नन्वियं युतसिद्धिरस्यैवावयवाऽवयविनोरित्यत्र तेन समवायो न स्यात्, युतसिद्धेरसमवायिव्याप्तत्वादिति भावः । इदं च चोद्यम् । पृथग्गतिमत्त्वं मिथोविभागहेतुक्रियासंबन्ध इत्यगृहीत्वा किन्तु पृथग्गतिमत्त्वं देशाद्देशान्तरगमनं युतसिद्धिः, सा चास्ति नष्टे तद्देशाद्देशान्तरं गच्छतस्तन्त्वादेरिति मन्वानस्य। अन्यथाऽवयवावयविनोर्विभागहेतुक्रियाभावादितीयं युतसिद्धिरस्त्येव । अवयवावयविनोरिति व्याकोपात् । यद्वा, देशादेरवयवस्य परावृत्त्य मध्यभागावच्छिन्नपटेन संयोगविभा-



गहेतुकर्मतया शक्यापादनमित्यभिप्रायवान् शङ्कते—**नन्वियमिति** । अत्र प्रथमव्याख्याने पृथग्गतिमत्त्वं मिथोविभागहेतुक्रियासंबन्धो युतसिद्धिः । सा च नास्त्येवावयविनोर्भवतु वा, तथापीयं युतसिद्धिर्नित्यानामेवासमवायनियता न त्वनित्यानामिति सिद्धान्तभाष्याभिप्रायः । द्वितीयव्याख्याने त्ववयवावयविनोर्मिथोविभागहेतुः कर्म दुरुपपादमेव, भवतु वा, तथापीयं युतसिद्धिर्नित्यानामेवासमवायसहकारिणीत्यभिप्रायः। **अपृथगाश्रयसमवेतानामिति** । एकाश्रयसमवेतानामित्यर्थः स्यात् भिन्नाश्रयासमवेतानामिति वा? प्रथमे उत्तरमाह—**तथा चेति**। द्वितीयमुत्तरयति–**समवायाभावेनेति**। **अवयवसंयोगनाश इति**(पृ.२४२)। अत्र पूर्वद्रव्यविनाशात् संयोगान्तरानुपपत्तौ चेति शेषः। **द्रव्येति** । द्रव्यान्तरेति विवक्षितम् । कुतः संयोगान्तरानुपपत्तिरित्याशङ्क्य संयोगान्तरोत्पादककर्महेतोर्नोदनादेरभावादित्याह–**नोदनेति** । नोत्पद्यतां तर्हि कार्यान्तरं किं नश्छिन्नमत आह—**तत्कार्यस्येति** । मा भूच्चिरकालावस्थायित्वं विभागस्योत्तरसंयोगनाश्यत्वं तु कुत इत्यत आह—**न चेत्यादिना प्रायणाद्यनुपपत्तिप्रसङ्गादित्यन्तेन**(पृ.२४३)। **तन्त्वन्तरे च कर्मेति** (पृ. २४४)। अविभज्यमानावयवे तन्तावित्यर्थः । यस्मिन् क्षणे तन्तुनाशाद्वितन्तुकारम्भकसंयोगनाशस्तस्मिन् क्षणे तन्त्वोर्विभागात् पूर्वक्षणवर्तिनः कर्मणो वा तन्त्वाकाशविभागः किं न स्यादित्याशङ्क्य व्याचष्टे–**कारणविभागेनेति** । शेषं सुगमम् ॥

**परस्परानुबद्धकारणतयेति** (पृ. २४९) । अन्योन्यानुगतकारणतया यदेव परत्वेन समवायितया कारणमपेक्ष्यते तदेवापरत्वेनावधितया सन्निकृष्टबुद्धिमुत्पादयति,

कालादयश्चानुगता एवेति । ननु परापरव्यवहारयोः संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वाभ्यामुत्पत्तेर्न ततोऽधिकपरत्वापरत्वे प्रमाणमिति शङ्कते—संयोगेति । समाधत्ते—नेति । तदपेक्षयेति । परप्रमितिविषयापेक्षयेत्यर्थः । संयोगबह्वल्पभावस्येति । यैव हि संयुक्तसंयोगपरम्परा देवदत्तमवधीकृत्य प्रमेये पर्यवसिता सैव प्रमेयमवधीकृत्य प्रमातरि देवदत्तेऽपि पर्यवसिताऽतः सा चेदल्पसंयोगवन्तमपेक्ष्य प्रमेये परव्यवहारं जनयेत् तर्हि प्रमातर्यपि जनयेदित्यर्थः । अथ सत्यमेकैकसंयुक्तसंयोगपरम्परा प्रमातृप्रमेययोः सत्त्वाश्रितया परव्यवहारविषयः । तेन यदा तावद्देवदत्तमवधीकृत्य प्रमेयाश्रयतयाऽवभासते तदा प्रमेयवद्देवदत्तेऽपि परव्यवहारापत्तिः तस्यावच्छेदकतया प्रतीयमानत्वेन तदाश्रयतया संयोगपरम्पराया अप्रतीतेः । यदा तु प्रमेयमवधीकृत्य देवदत्ताश्रयतया संयुक्तसंयोगपरम्परा चकास्ति तदा विशिष्ट एव प्रमातर्यपि परादिव्यवहार इत्याशङ्क्य प्रमात्राश्रयतया संयुक्तसंयोगपरम्पराऽनुसन्धानेऽपि न तत्र परादिव्यवहार इति दर्शयति—भवति हीति । यैव मामवधीकृत्य संयुक्तसंयोगपरम्परा वाराणस्यां सैव वाराणसीमवधीकृत्य मयीत्यनुसन्धानेऽप्यहं वाराणसीतः परतोऽर्वाग्वेति परापरव्यवहाराविति अत्रानुभवः प्रमाणमित्यर्थः । किञ्चिदपेक्ष्येति । अनियतमित्यर्थः । तदविशेषणादिति । संयुक्तसंयोगपरम्परायाः प्रमातृप्रमेययोरविशेषादित्यर्थः । कारणेति । किञ्चिदेव प्रमातृव्यतिरिक्तं स्वात्मनि परत्वारम्भे शक्तं गगनमिवात्मनि शब्दारम्भे । तेन संयुक्तसंयोगपरम्पराया उभयाश्रयत्वेऽपि प्रमेय एव परत्वादिनियमो(यथा)भेर्याकाशसंयोगस्योभयाश्रयत्वेऽपि गगने शब्दोदयनियम इत्यर्थः । यद्वा,



कारणानां हि समवायिकारणे कार्यमारम्भणीयमिति शक्तिनियमः, परत्वापरत्वयोश्च प्रमातृव्यतिरिक्तमेव समवायिकारणं, तेन संयुक्तसंयोगपरम्परोभयवर्तिन्यपि प्रमेय एव परत्वादि जनयति भेर्याकाशशब्दसंयोग इवाकाश एव शब्दमित्यर्थः । नन्वस्मन्मतेऽपि प्रमेय एव संयुक्तसंयोगपरम्पराव्यवहारहेतुरित्यनतिप्रसङ्ग इत्यत आह—नन्विति । देवदत्तव्यतिरिक्तादि तावन्न परादिव्यवहारविषयः । यद्व्यतिरिक्तोयंपरश्चेति सहप्रयोगादिदर्शनात् । संयुक्तसंयोगपरम्परा वाऽविशिष्टा अविशिष्टादेव शिष्टव्यवहारे घटादेव शुक्लादिव्यवहारोपपत्तेः शुक्लादिविलय इत्यर्थः । सर्वत्रेति । भिन्नदिगवस्थितपिण्डयोरपीति । सर्वथेति । द्रष्टृभेदेनापीत्यर्थः । परस्परापेक्षयेति । तुल्यदिक्कं तुल्यद्रष्टृकं च परत्वमपरत्वस्यापेक्षणीयम् । अपरत्वं च परत्वस्येत्यर्थः । ननु मा भूत्परत्वापरत्वयोरुत्पत्तौ परस्पराश्रयं तद्धेतुभूतसंयुक्तसंयोगभूयस्त्वाल्पत्वयोस्तु न भविष्यत्यत आह—संयुक्तसंयोगेति[पृ. २५१]। ननु प्रत्यहं शरीरस्य भेदान्न युवशरीरस्याल्पतरनयनपरिस्पन्दान्तरितत्वं, नापि स्थविरशरीरस्य बहुतरनयनपरिस्पन्दान्तरितत्वं, तत्कथं तदपेक्षया युवस्थविरयोः परत्वापरत्वोदय इति ? उच्यते, न प्रत्यहं शरीरस्य भेद इति परमतमापादयता भाष्यकारेण युवस्थविरयोः परत्वापरत्वोदयश्चर्चितः । स्वमते तु घटादौ स्थिरं परत्वापरत्वोत्पत्तिर्द्रष्टव्या । 'अपेक्षाबुद्धिद्रव्यसंयोगद्रव्यनाशात्' इति भाष्यं सप्तधा नाशं प्रतिपादयति, तस्यार्थं श्लोकेन संगृह्णाति—अपेक्षेति ।

बुद्धिर्ज्ञानमित्येतावता कीदृग् लक्षणं फलितमित्यत आह—यस्मिन् सतीति । जानामीति विशिष्टप्रतीतौ व्यावृत्तिसमानाधिकरणो हेतुर्ज्ञानमित्यर्थः । न चानुव्यवसीयमानज्ञा-

नाव्याप्तिः नष्टतन्तोः पटानुदयवत्ततो विशिष्टप्रतीत्यनुदयेऽपि ज्ञानजातीयं जानामीति विशिष्टप्रतीतिहेतुरिति सामान्यतः प्रवृत्तकार्यकारणभावमानविषयत्वादिति ज्ञानत्वाधिकरणं बुद्धिरिति लक्षणनिष्कर्षः। अथ बुद्धिरितरस्माद्भिद्यते अनादिप्रवाहायातबुध्यादिविपर्ययाऽभिधेयत्वात् यस्त्वितरस्मान्न भिद्यते नासावेवं यथा रूपादिरिति पर्यायलक्षणमित्येव किं न व्याख्यातमिति चेत। एकैकबुध्यादिशब्दवाच्यत्वस्य व्यभिचाराभावेन नैकपर्यायाणां लक्षणत्वायोगात्। बुद्धाविति। बुद्धावन्तःकरणे वर्तमानेन ज्ञानतया व्याख्यातेन परिणामेन चिच्छक्तेः पुरुषस्य तद्वदाभिमाने भेदाग्रहात्। बुद्धिचेतनयोरिति शेषः। भेदाग्रहात् बुद्धिचेतनयोरैक्याध्यासात् बुद्धिधर्माणां चेतरानध्यास इत्यर्थः। आदर्शभूतायामिति। बुद्धेः स्वच्छत्वं बुद्धौ चेतनाध्यासे निमित्तमुक्तम्। तदनेनेति। पर्यायत्वकीर्तनेनेत्यर्थः। अन्तःकरणे बुद्धिशब्दः करणव्युत्पत्त्या वा प्रवर्तते भावव्युत्पत्त्या वा? प्रथमे न विवाद इत्याह—यदि तावदिति। द्वितीयं दूषयति—भावार्थश्चेति। अन्तःकरणसाध्यत्वात्प्रत्यक्षत्वाच्च नासावन्तःकरणमित्यर्थः। ननु मा भूदन्तःकरणं भावव्युत्पन्नबुद्धिशब्दार्थः, तद्धर्मस्तु ज्ञानत्वेन व्याख्यातो भविष्यति बाधाभावादिति कथमात्मधर्मस्य बुद्धिशब्दवाच्यत्वमत आह—अत एव न तद्धर्मोऽपीति। बुद्ध्यधिकरणमनात्मा परिणामित्वाद् घटवदित्यनात्मधर्मत्वस्थितौ बुद्ध्यादेरात्मधर्मत्वमाभिमानिकमत आह—यद्धर्मः खल्विति। यद्यात्मत्वं बुध्याश्रयत्वं तद्व्यवस्थाप्यजातिमत्त्वं तन्निमित्तकात्मशब्दवाच्यत्वं वा तर्हि तन्निषेधे विरोधः, तदन्यप्रसिद्धपदार्थरूपतानिषेधे सिद्धसाधनम्। अप्रसिद्धपदार्थरूपतानिषेधे चाप्रसिद्धविशेषणत्वमिति भावः।



ननु बुद्धेरात्मधर्मत्वे धर्मधर्मिणोरभेदात् बुद्ध्युत्पादविनाशयोरात्मनोऽप्युत्पादविनाशवदेकरूपत्वलक्षणकूटस्थनित्यत्वभङ्ग इत्यत आह—न चैवमिति। ननु धर्मधर्मिभावो घटपटयोरिव भेदेऽनुपपद्यमानो बुद्धितदाधारयोस्तादात्म्यं गमयतीत्यत आह—अत्यन्तेति। भेदेऽपीति कोमलोक्तिः भेदे एवेति द्रष्टव्यम्। एवं पराभिमतं बुद्धिशब्दार्थं निराकृत्योपलब्धिशब्दार्थं निराचष्टे—एतेन तद्वदभिमानोऽपीति। एतेनेति। ज्ञानाश्रयस्यात्मत्वव्युत्पादनेनेत्यर्थः। यदा ज्ञानमात्मन्येव तदाऽन्तःकरणवर्तिना ज्ञानेन तद्वत्ताभिमान आत्मनि नास्तीति नासावुपलब्धिशब्दार्थ इति भावः। ननु विषयविशेषवति कारणविशेषवति च ज्ञाने स्वरूपविशेषो वाच्यः, हेतुवैषम्यादेः कार्यवैषम्यानियतत्वात्, तेन तमुपेक्ष्य विषयकारण एव भेदकतया किमर्थमुक्त इत्यत आह—ताभ्यामेवेति (पृ० २५९)। संशयविपर्ययव्यतिरेके मानविरहात्तर्कस्यागणनमस्त्वत आह—अनुभूयत इति (पृ. २६०)। न केवलमनुभूयते मानानुग्राहकत्वेन च कल्प्यते इत्यत आह—प्रमाणानामिति। कथं पुनरस्य मानानुग्राहकत्वमत आह—प्रमाकरणनिष्ठः पौरुषेय इति। न ह्यन्यथा धर्मो न स्यादिति निषेध्यधूमनिष्ठं सम्वेदनं विनाऽनिवृत्तसाध्याभावजिज्ञासानिश्चितादपि लिङ्गाद्वह्निं प्रमिणोतीति भावः। प्रमाणानामनुग्राहक इति। अनेनार्थादाक्षिप्तं प्रमाणविषयमेव तर्कस्य विषयतया दर्शयति—अस्य हीति। अज्ञानतत्त्व इति। वन्ह्यादिमत्तया निर्णीतः पर्वतादिरित्यर्थः। तत्र हि तर्कज्ञानेन च लिङ्गज्ञानेन च प्रमितिराधीयत इति स तस्य विषय इत्युक्तम्। अवच्छेदकत्वेन तु तस्य धूमाभावादिरेव विषय

इति । प्रसङ्गात्मेत्यनेनाक्षिप्तं तर्कज्ञानहेतुं स्पष्टयति—**कारणोपपत्तिरिति । पराभ्युपगतेति** । पराभ्युपगमेनारोपितत्वं विवक्षितं, तेनारोपितहेतुलक्षणेति फलति । तेन यदि जलं भवेत् ततस्तदुपशमो भवेत् इति संभावनरूपतर्कस्यापि व्याप्तिरिति । अत्र चारोपितत्वं पक्षधर्मत्वमात्रे विवक्षितं न तु व्याप्यत्वेऽपि । तथा सति मूलशैथिल्यापत्तेरिति । तदनेनानुमितितर्कज्ञानयोरियदेव हेतुवैषम्यं यदेकत्र पक्षधर्मत्वं प्रमितमन्यत्रारोपितमिति, इयदेव च दोषवैषम्यं यदेकत्र तद्धर्मत्वाप्रमितिबाधो दूषणम् अन्यत्र तु तद्धर्मत्वारोपो दूषणं पक्षधर्मत्वाप्रमितिप्रमितिबाधौ तु दूषणमिति विवेचनीयम् । विपर्ययापर्यवसानं तर्कस्यानुमानव्यावृत्तं दूषणमिति, तत्तु युक्तम् । विपर्ययस्य व्याप्तिभङ्गपक्षधर्मत्वभङ्गबाधादिषु आवश्यकतर्कमूलव्याप्तिभङ्गेष्टापादनापादकपक्षधर्मत्वानारोपैरेव दुष्टत्वात् स्वातन्त्र्येण प्रसङ्गदोषत्वे बीजाभावात् । तर्कलक्षणं तु व्याप्यस्य पक्षधर्मतारोपादभिमतव्यापकतापत्तिस्तर्क इति । न च पराभ्युपगमसिद्धव्याप्तिकवस्तुतोऽव्याप्यलब्धजन्मनः प्रसङ्गस्याव्याप्तिः तस्य परमात्रसिद्धव्याप्तिकसाधनजन्यानुमितिवदाभासत्वादिति । यद्वा, पराभ्युपगतेति यथाश्रुतमेव, पराभ्युपगमश्च व्याप्तिपक्षधर्मतादिगोचर इति ग्राह्यम् । तेन यावदनुमाने प्रमितमुपयुज्यते तावत्तर्के पराभ्युपगतमिति विवेकः । तेन समवाये समवायाभ्युपगमे तत्रापि समवायान्तरापत्तिरित्यादिस्थले द्वितीयसमवायादेरसिद्धेराश्रयासिद्धोऽनवस्थारूपतर्क इति समाहितम् । अस्मिन् पक्षे तु तर्कलक्षणं पराभ्युपगतव्याप्तिपक्षधर्मतावताऽनभिमतव्यापकापत्तिस्तर्क इति । इदं तु परमतमिति । प्रमाणानामनुग्राहक इति विवृणोति—**प्रमाणमनुग्राह्यमिति** । कः पुनः प्रमित्युपयोगी प्र-



माणस्यानुग्राहकस्तर्केण क्रियते इत्याशङ्क्य साध्याभावजिज्ञासाविच्छित्तिरित्याह—**अनियतेति** । सेयं जिज्ञासा विच्छित्तिराहित्येनोपयुज्यते न तु प्रमितिनियतविषयजिज्ञासोत्पादकत्वेन, विपरीतजिज्ञासाविच्छित्तिमात्रेण प्रमोपपत्तौ सर्वत्र प्रमितिनियतविषयजिज्ञासायां मानाभावात् ; भावे वाऽस्तु तत्सम्पादकत्वेनैवानियतजिज्ञासाविच्छित्तेरुपयोगः, तदिदमाह—**अनियतजिज्ञासाविच्छेदेन नियतजिज्ञासाजननमनुग्रह इति** । नन्वेवं सत्यनभिमतकोटावनिष्टापत्तिरभिमतैककोटिविषयां सम्भावनां प्रमाणस्यानुग्रहमाचक्षत इत्याचार्यवचो विरुध्यत इत्यत आह—**सैवेति** । अनियतजिज्ञासाविच्छित्तिनियतजिज्ञासाभ्यामेव प्रमोपपत्तौ तद्व्यतिरिक्ता संभावना निर्बीजेत्यर्थः । प्रमाणानामनुग्राहक इत्यनेनाक्षिप्तं प्रमाणफलमेव तर्कस्य फलमित्याह—**प्रमाणाङ्गस्येति** । प्रसङ्गात्मेत्युदाहरणेन स्पष्टयति—**इहेति** । संशयात्प्रच्युत इति विवृणोति—**न च संशय एवेति** । निर्णयं चाप्राप्त इति विवृणोति—**न च निर्णय इति** । निर्णयः प्रमितिः । ननूपलम्भयोग्यघटसत्त्वपक्षेऽनुपलब्धेरभावः सत्य एवेति तद्विषयस्तर्कोऽयथार्थ इति भूतले घटदर्शनं सत्यमिति कथं तद्विषयस्तर्कोऽयथार्थ इत्यर्थः । शङ्के—**यदि स्यादिति** । **अनियतेति** । अनेकपक्षप्रसङ्गेऽन्यतमपक्षपरिग्रहो यदिशब्दार्थः । तेन यदि स्यादिति सत्त्वाभ्युपगमपक्ष इत्यर्थः । न चैतावत्यदर्शनवति भूतले घटादर्शनं सत्यमिति कथं तद्विपर्ययस्तर्को यथार्थ इत्यर्थः । **कथं तर्हीति** । यद्यारोपस्तर्हीत्यर्थः । अनियतजिज्ञासाविच्छेदः प्रमितावनुपयोगान्न प्रमाणेनानुग्रहतयाऽपेक्षणीय इत्याशङ्क्य प्रतिबन्धाभावत्वेनायमुपयुज्य-

त इत्यभिप्रायवान् विपरीतेच्छायाः क्रियामात्रे प्रतिबन्धत्वमन्वयव्यतिरेकसिद्धमित्याह—न हि कुर्यामिति । अत्र प्रमातुः कर्तृत्वं प्रमितेः क्रियात्वमिति लोकव्याकरणसिद्धम्, विपरीतजिज्ञासाप्रमितिविशेषप्रतिबन्धोऽन्वयव्यतिरेकाभ्यामित्येतावदेव विवक्षितम् । तथाहि येषामभावसन्देहं व्याघातो विरुणद्धि तेषामभावजिज्ञासा संवित्तिपरिपन्थिनी विपरीतजिज्ञासायां सत्यां वाक्यादिभ्योऽर्थान्तरानवगमात् तदभावे चावगमात् । तेन तदभावो व्याप्तिप्रमानुमितिशब्दादिप्रभवसम्वेदननिदानम्, स चान्यतो न सिध्यतीति तर्कात् । न च विपरीतजिज्ञासानिदानशङ्कैवानुमित्यादिप्रतिबन्धः, तदभाव एव चानुमित्यादिनिदानं, स च तर्कादिति श्रीवल्लभाचार्यानुरोधादादरणीयम् । तत्त्वाज्ञाननिदानायाः शङ्कायास्तत्त्वज्ञानात्पूर्वं तर्केण निवर्तयितुं भविष्यन्त्याश्च रोद्धुमशक्यत्वात्तन्निवृत्तिप्रमाङ्गत्वानुपपत्तेः । तत्त्वाज्ञानोत्पाद्यामपि पूर्वशङ्कां निवर्त्तयितुमुत्तराशङ्कां किं न निरुन्ध्यादिति चेत् । वन्हिमान्न वेत्यादिशङ्कया धूमवान्न स्यादित्यादितर्कसंवेदनानामविरुद्धार्थत्वात् । विरुद्धार्थत्वेनैव च सम्वेदनानां प्रतिबन्धाऽप्रतिबन्धभावस्य बाधसत्प्रतिपक्षादौ निर्णयादिति । न च करचरणादिविशेषोपलम्भवाद्भिन्नविषयमपि तर्कसम्वेदनं सन्देहविरोधीति वाच्यम् । करादिविशेषोपलम्भस्यापि भिन्नविषयत्वेन शङ्काविरुद्धत्वानङ्गीकारात् । किमर्थं तर्हि सन्देहनिवृत्तिस्तदपेक्षते इति चेत् । स्वोत्पादकोपलम्भार्थत्वेनैवमिति गृहाण । तर्कासम्पाद्यत्वे कुतः शङ्कानिवृत्तिरिति चेत् । तर्काद्विपरीतजिज्ञासालक्षणप्रतिबन्धकनिवृत्तावुत्पन्नादनुमित्यादेः । यदाह कुसुमाञ्जलौ—"ततः शङ्कैव फलतः स्वरूपतश्च निवर्तनीया तत्र फलमस्या विपक्षस्यापि



जिज्ञासा तर्कादाहत्य निवर्त्तते ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्" इति । भवतु यथाकथञ्चित्तर्कस्योपयोगः सर्वथा तु मयाऽसावपेक्षणीयोऽन्यथा साधर्म्यमात्रस्य गमकत्वप्रसङ्गादिति । ननु विभिन्नविषयत्वादेवातत्त्वदर्शने समुत्थां शङ्कामिव जिज्ञासामपि तर्को न निरुन्ध्यादिति शङ्कते—अनियतेति । भिन्नविषयाऽप्यनिष्टापत्तिरन्वयव्यतिरेकाभ्यामवधृतशक्तित्वाद्भिन्नविषयामिच्छां विच्छिनत्ति न तु ज्ञानमनवधृतशक्तित्वादिति समाधत्ते—अनिष्टेति ।

अथ तर्कमूलभूतव्याप्तौ तर्कानभिधाने मूलशैथिल्यमभिधाने त्वनवस्थितिरिति चेत् । न, यत्रैवं शङ्कोदयस्तत्रैव तत्कार्यविपरीतजिज्ञासानिवृत्तये तर्काभिधानात् यत्र तु व्याघातेन शङ्कैव निरुद्धोदया तत्र तदभावादेव न विपरीतजिज्ञासेति न तर्काभ्यर्थनमिति । न हि हेतुफलभाव एव मा भूदिति शक्यशङ्कम् । तथा सति हेत्वभावे शङ्काया एव व्याहतेरिति तर्कः । उभयोर्यौ विशेषौ स्थाणुत्वपुरुषत्वे इति यावदिति व्याख्यानं सन्देहे स्थाणुत्वपुरुषत्वविशेषितं पुरोवर्तिमात्रं विषयः स्थाणुर्वा पुरुषो वेति स्थाणुत्वपुरुषत्वविशिष्टपुरोवर्तिव्यवहारमात्रस्य तावन्मात्रेणैवोपपत्तेरित्यभिप्रायवत आचार्यस्य । यदा तु स्थाणुर्वा पुरुषो वेति सन्देहे स्थाणुपुरुषतादात्म्यं पुरोवर्तितया विषयोऽन्यथा स्थाणुपुरुषव्यक्त्यर्थिनः पुरोदेशप्रवृत्त्यनुपपत्तेरिति स्थितिः, तदोभयविशेषाऽनुस्मरणादिति उभयोः स्थाणुपुरुषयोरूर्ध्वधर्मविशेषयोरनुस्मरणादिति व्याख्येयम् । अत एवाग्रे उभयविषयविशेषो गोगवयरूपो विशेष इति व्याख्यास्यते, अन्यथा गोत्वगवयत्वरूपो विशेष इति व्याख्यानप्रसङ्गादिति । उभयविशेषानुस्मरणनिर्णायकादर्शनसहितात्समानधर्मदर्शनादिति । अ-

त्र निर्णायकादर्शनेन तत्त्वानिर्णयं दर्शयति । तेनोभयविशेषस्मरणतत्त्वानिर्णयौ सन्देहनिदानमिति तात्पर्यम् । साधारणधर्मदर्शनं तूभयविशेषानुस्मरणद्वारेणोपयोगि न तु साक्षात्, विशेषस्मरणतत्त्वानिर्णयाभ्यामेव सन्देहोपपत्तौ साधारणधर्मदर्शनस्य हेतुत्वे मानाभावात् । अमुमेवार्थं प्रकटयति आरोप्यज्ञानजनितसंस्काराभिव्यक्तिकारितया तदुपस्थापनेन हि सारूप्यमुपयुज्यत इत्यादिना विषयप्रकरणे । ननु साधारणधर्मवदुपलब्ध्यनुपलब्धिविप्रतिपत्तिजा अपि सन्देहाः सन्ति तत्कथं सादृश्यमात्रदर्शनादित्यादिना समानधर्मज एव सन्देह उक्त इत्याशङ्क्य तेऽप्यस्यैवावान्तरभेदा इति व्युत्पादनाय सन्देहद्वैविध्यप्रतिपादकं भाष्यं 'स द्विविधोऽन्तर्बहिश्च' इति, तदवतारयति—**ज्ञानधर्मनिमित्तक इति**[पृ.२६१]। मानसप्रत्यक्षधर्मो निमित्तं विवक्षितम् । अन्यथा धर्माद् ज्ञानत्वाद्यथार्थमयथार्थं वेति उदाहरणविरोधादिति ज्ञानधर्मात् संशयोऽतः संशय इत्युपलब्ध्यनुपलब्धिविप्रतिपत्तिप्रभवं सन्देहत्रयं संगृहीतम् । उपलब्धिजत्वादिकृतः साधारणधर्मजत्वाविरोधेनैवावान्तरभेदो यथा प्रत्यक्षानुमानविषयत्वकृतो भेद इति व्युत्पादनार्थं प्रत्यक्षानुमानविषयत्वेन भेदप्रतिपादकं भाष्यमवतारयति—**द्वितीयां विधामिति**(पृ.२६२)। कथं पुनरुपलब्ध्यादिप्रभवसन्देहानां समानधर्मजत्वमित्याशङ्क्य भाष्यतात्पर्यमाह—**एतदुक्तमिति** । योग्यानुपलब्धिस्तत्त्वभावं निश्चिनोत्येवेति । अत उक्तम्—**अयोग्यत्वेनेति** । (पृ०२६३) । **व्याहतप्रतिपत्तित्वादिति** । यदा व्याहतप्रतिपत्तौ धर्मिभूतायां किमियं सत्येव वह्निमत्त्व उतासतीति सन्देहस्तदा विप्रतिपत्तित्वं साधारणो धर्मः, यदा तु विप्रतिपत्तिविषयपर्वतादौ किमयं वह्निमान्न वेति सन्देहस्तदा तत्सदृशत्वं विप्रतिपत्तिरेव विषयविषयिभा-



वसम्बन्धेन पर्वते साधारणो धर्म इत्यर्थः । उपलब्ध्यनुपलब्ध्योरेवमेव द्रष्टव्यम् । उपलब्ध्यादिजन्यसन्देहसंग्रहेऽप्यसाधारणधर्मजसन्देहो न व्याप्यत इत्यत आह—**असाधारणस्त्विति** । तौ स्थाणुपुरुषाविति स्थाणुपुरुषस्मरणे तज्जनकं सादृश्यविशिष्टधर्मिज्ञानं वाऽन्यत्रापि निश्चयरूपमस्ति, स्थाणुर्वा पुरुषो वेति तु ज्ञानमनिश्चयात्मकं तेन ततो भिद्यत इति । ननु स्थाणुः पुरुषो वेति अनिश्चयात्मकं ज्ञानमेवासिद्धं स्थाणुः पुरुषो वेति व्यवहारस्य प्रमृष्टतदंशसंशयकारणत्वेनाङ्गीकृतस्थाणुपुरुषस्मरणपुरोवर्तितत्त्वाज्ञानाभ्यां स्थाणुपुरुषपुरोवर्तिभेदाग्रहसहिताभ्यां स्वगतभेदाग्रहसहिताभ्यां वोपपत्तेरित्यत आह—**भेदाग्रहे त्विति** । **विकल्पविषयत्वादिति** । संशयविषयत्वादित्यर्थः । अत्र स्थाणुर्वा पुरुषो वेति वाशब्दस्यैकत्र धर्मिणि स्फुरितयोर्विरोधोऽर्थ इत्यभिप्रेतम् ।

नन्वस्तु अयथार्थज्ञानं विपर्यय इत्येतावदेव लक्षणं, स्वप्नादेश्च विपर्ययेऽन्तर्भाव इत्यत आह—**लोके तथैवेति**[पृ०२६४]। स्वप्नादीनपि पक्षीकृत्यायं लौकिकाविपर्ययव्यवहारे विषय इति साधने बाधादविशिष्टलक्षणम् । अन्यथा ज्ञानं विपर्यय इत्येतावतोऽपि लक्षणतापत्तेरिति भावः । आरोप्यापरिज्ञान इति युक्तिः प्रवृत्त्याद्यजनकत्वे विपर्ययो न समारोप्यज्ञानमाक्षिपति । प्रवृत्त्यादिजनकत्वे पुनराक्षिपति इत्यपि न रजताद्यारोपार्थमपि त्विष्टसाधनताज्ञानार्थमित्यपरितोषाद् युक्त्यन्तरमाह—**अनुपलब्ध इति** । आरोपविषयज्ञानस्य विपर्ययाङ्गत्वमुपपादयति—**आरोपविषयेति** । **कथमेतदिति** । सादृश्यस्य भ्रमहेतुत्वमित्यर्थः । **आरोप्यज्ञानेति** । बुद्धिस्थमारोप्यते, सा च बुद्धिः क्वचित् स्मृतिः क्वचिदनुभवः । तेन यत्र स्मृतिः तत्र संस्कारस्तदुत्पत्तये सा-

दृश्यमपेक्षते, यत्र तु गोलकसंस्पृष्टपित्तपीतिमानायनतेजःसंपर्काद्बहिर्गतोऽनुभूयमान एवारोप्यते न तत्र सादृश्यस्यापेक्षेति परिहारान्तरमाह—न चेति । शङ्खे पीतिमोपसंसृष्टत्वं स्मर्यमाणमारोप्यते । तत्स्मरणोपयुक्तं च सादृश्यमपीतरूपासंसृष्टत्वेनाज्ञानं, तच्च मनसोपलभ्यमानं स्मृतिहेतुरिति भावः । यद्वा ऽगृह्यमाणासंसर्गत्वमियनेन पीतिमसंसृष्टं द्रव्यान्तरसाधारणं पार्थिवत्वसंस्थानविशेषादि विवक्षितम् । तच्च चक्षुषैव गृह्यमाणं स्मृतित्वहेतुरिति । ननु दोषसहितस्येन्द्रियस्य भ्रमहेतुत्वे तद्विरुद्धप्रमाजनकत्वं न घटत इति न दोषाणां भ्रमजन्मनीन्द्रियसहकारित्वमपि त्विन्द्रियगतप्रमाजननशक्तिविहन्तृत्वमेवेत्यत आह—न चेति(पृ०२६५। परेषां चेति । रजतज्ञानस्य रजतविषयप्रवृत्तिहेतोस्तद्विरुद्धशुक्तिविषयप्रवृत्तिहेतुत्वं भेदाग्रहबलात्परैरपीष्टमित्यर्थः । रजतत्वज्ञानस्यागृह्यमाणासंसर्गव्यक्तिविषया प्रवृत्तिः कार्यं, सा च विभ्रमाऽविभ्रमस्थलसाधारण्यविरुद्धैवेति रजतत्वज्ञानस्य विरुद्धकार्यकारित्वमिति चेत् ! न, उपादानासमर्थरजतत्वज्ञानस्याप्रवर्तकत्वास्थितौ उपादानसमर्थरजतव्यक्तिज्ञानस्यैव प्रवर्तकत्वात् । तस्य च रजतव्यक्तिशुक्तिविषयविरुद्धप्रवृत्तिजनकत्वादिति । रजतव्यक्तिज्ञानस्यापि स्वतो गृहीतभेदविषयप्रवृत्तिरूपं सर्वत्राविरुद्धमेव कार्यमिति चेत् एवं तर्हि इन्द्रियस्यापि सम्यङ्मिथ्यास्थलसाधारणं रजतज्ञानमविरुद्धमेव कार्यमिति तुल्यम् । अथ रजतज्ञानत्वेनाप्यविरुद्धत्वेऽप्यवान्तरभ्रमाभ्रमरूपेण कार्ययोर्विरुद्धतेति चेत् तर्हि रजतागृह्यमाणभेदविषयप्रवृत्तित्वेनाविरुद्धत्वेऽपि रजतशुक्तिविषयतया प्रवृत्त्योर्विरुद्धकार्यतैवेति संतोष्टव्यम् । अञ्जनपुञ्जेति भाष्ये तमःशब्देन भूविशेषगोलकगतं कृष्णरूपं सर्वतो गगनादौ चक्षुरादौ रात्रावारोप्यमाणं विवक्षितमिति कैश्चिद् व्याख्यातं,



तदुपपादनार्थं च यथा दिवसे नीलं नभ इत्यत्र नयनं भूगोलकगतं नीलिमानमवभासयति इत्युदाहृतं तद् दूषयितुमनुभाषते—यदिति[पृ. २६६] । एवं परव्याख्यानं निरस्य स्वमतेन व्याख्यातुं भाष्यमवतारयति—तथाऽपीति । अन्यथाख्यातौ विप्रतिपद्यमानाः प्रभाकरमाध्यमिकयोगाचारमायावादिनः किमिष्टानिष्टसाधनसमर्थवस्तुबोधे विप्रतिपद्यन्तः किं वा कयाचिद् भङ्ग्या तस्यान्यथाख्यातित्वे ? नाद्य इत्याह—इह विभ्रम इति [पृ. २६७]। इष्टसाधनबोधस्य सर्वेषामपि प्रवृत्त्युपयोगित्वादिति भावः । द्वितीयेऽपि पक्षे प्रवृत्तिविषयतया स्वसिद्धान्ताङ्गीकृतपुरोवर्तिशुक्तिशकलासद्रजतज्ञानाकाररजतानिर्वाच्यरजतानामेवेष्टसाधनत्वात् तज्ज्ञानं प्रवृत्तिहेतुरिति मतम् इष्टासाधनानामेवेष्टसाधनाभेदज्ञानं वा ? तत्र प्रथमं पक्षं प्राभाकरं प्रति दूषयितुम् अनुभवसिद्धमिति । अस्यानन्तरं 'न च पुरोवर्तिनः पुरोवर्तितया परिस्फुरणे प्रवृत्तिर्घटते तस्येष्टसाधनत्वापरिज्ञानात् । तेन रजताभेदज्ञानं भेदाग्रहो वेति द्वयमेव प्रवृत्तिहेतुतया परिशिष्यते' इति पूरणीयम् । माध्यमिकं प्रति प्रथमपक्षे दूषणमाह- न चासत इति । सत्तया इष्टसाधनसमर्थत्वाकारेणेत्यर्थः । योगाचारं प्रति प्रथमपक्षे दूषणार्थमाह—ज्ञानेति । ज्ञानाकारप्रवेदन इति । ज्ञानाकारोऽयमिति प्रवेदन इत्यर्थः । ज्ञानाकारत्वबोधे रजतस्य किमिति रजतप्रवृत्त्यनुपपत्तिरित्यत आह—न हीति । असतः सत्त्वेनेति माध्यमिकं प्रति असमर्थस्य समर्थत्वेनेति, योगाचारं प्रति तद्भेदाग्रहो वेति ।

तेन सता भेदाग्रहस्तेन समर्थेन भेदाग्रहो वेति यथासंख्यं ग्राह्यम् । मायावादिनं प्रति प्रथमपक्षदूषणमाह— **विचाराऽसहेति** । ननु रजतमिष्टसाधनं शुक्तिमस्तकोत्पन्नमनिर्वाच्यमपि रजतमेव । यत्तु ततः केयूरादेरनुदयः, तत्तु केयूरादिसिद्धेरर्वागेव शुक्तियाथात्म्यज्ञानेन विनाशाद्विनष्टादिव रजतान्तरात् किमुच्यते विचारासहमेतद्रजतमित्यादि ? एवमात्मख्यात्यादिपक्षेऽपि वाच्यमिति चेत् । न, शुक्तिमस्तकोत्पन्नस्य रजतत्वेऽपि ततो नियतप्रतिपक्षवेद्यत्वादिधर्मवतो हट्टादौ वर्तमानरजतस्य सकलप्रतिपत्तृसाधारणत्वादेव वैलक्षण्यमङ्गीकरणीयम् । तथा च तस्यैवेष्टसाधनत्वं न विभ्रमाऽविभ्रमसाधारणरजतमात्रस्य, मानाभावात् । तेन शुक्त्याद्यज्ञानसमुत्थस्य रजतस्येष्टसाधनत्वाभावात्, तदवगमात्प्रवृत्तिरिति तस्य हट्टादिगतरजतात्मना प्रतीतिः तद्भेदाग्रहो वा प्रवृत्तिहेतुतया परिशिष्यत इति । द्वितीयं पक्षं दूषयति— **तत्र प्रथम इति**[पृ.२६८] । तत्रेति परिशिष्टपक्षयोर्मध्ये इत्यर्थः । अत्र चासत्ख्यात्यादिपक्षत्रये असद्रजतादिप्रतीतिमङ्गीकृत्यापि चेत्तस्य समर्थरजतात्मना प्रतीतिर्वाच्या, तद्वरं शुक्तेरेव रजतात्मना प्रतीतिरस्तु लाघवायेति दूषणं द्रष्टव्यम् । चरमपक्षे दूषणमाह— **द्वितीये त्विति** । अत्र चासत्ख्यात्यादिपक्षत्रये यद्यन्ततोऽपि गत्वा भेदाग्रहः शरणं तच्छुक्तिरजतयोरेव भेदाग्रहात्प्रवृत्तिरस्तु लाघवायेति दूषणं द्रष्टव्यम् । **अभेदाग्रहस्य संभवादिति** । अत्र युगपत्प्रवृत्तिनिवृत्तिप्रसङ्ग इति शेषः । दोषान्तरमाह—**न चेति** । अन्यस्य पुरोवर्तिविषयरजतज्ञानस्य



कार्यं पुरोवर्तिरजतप्रवृत्तिरूपमन्योऽप्यपुरोवर्तिज्ञानरूपः करोति अनियतहेतुत्वप्रसङ्गादित्यर्थः । अतिप्रसङ्गलक्षणदोषान्तरमाह— **विस्फुलिङ्गेति** । उक्तदोषत्रयपरिहारमाशङ्कते—**स्यादेतदिति** । समाधत्ते—**नास्मन्नयेति** । यथाऽन्यथाख्यातिमते रजताभेदज्ञानमरजतभेदज्ञाननियतमेवं भेदाग्रहपक्षेऽपि भ्रमस्थले रजतभेदाग्रहो रजतभेदाग्रहानियत एव वक्तव्यः । अन्यथा पुरोवर्तिनो रजतस्य प्रतीयमानेनारजतेन भेदग्रहे विभ्रमापत्तिरित्यर्थः । नन्विदमंशे रजतव्यतिरिक्तारजताप्रतीतेः कथं पुरोवर्तिनो रजतभेदग्रहे विपरीतख्यात्यापत्तिरत आह— **इदं रजतमिति** । इदमिति पुरोवर्तिज्ञानं रजतमिति स्मृत्यनुभवत्वाभ्यां संदिह्यमानं रजतत्वविशिष्टव्यक्तिज्ञानं विशिष्टज्ञाने च विशेष्यं तस्येतरव्यावृत्तिश्च विषय इत्युक्तम् । तेन रजतमित्यवधारणात्मकमरजतव्यावृत्तिसहितरजतव्यक्तिज्ञानरूपमित्यर्थः । **अरजतात्मन इति** । पुरोवर्तिशुक्तिशकलस्य । **तदनात्मनेति** । अरजतं नेत्येवमात्मनेत्यर्थः । नन्वस्त्वपेक्षितभेदाग्रहवदनपेक्षितभेदाग्रहेऽपि, किमनिष्टमत आह— **भेदाग्रहमात्रेणेति** । ननु नेदमरजतमित्यत्रारजतं नेत्यरजतभेदः पुरोवर्तिना अगृह्यमाणसंसर्गो भासते तेनानपेक्षितभेदाग्रहाभावात्तन्निवृत्तेरापत्तिः, नाप्यन्यथाख्यात्यापत्तिः । रजत आरोप्यपुरोवर्तिसंसृष्टत्वेनानवभासनादित्यभिप्रायवान् शङ्कते— **नेदं रजतमिति** । अनपेक्षितभेदग्रहो नञर्थः कुतो भेदाग्रह इति । समाधत्ते— **मा भूद्भेदग्रहस्तावदिति**(पृ.२६९) । भेदग्रहाऽभावो हि भेदाग्रहः । तेन तन्निषेधे भेदग्रह एवा-

तो यदि निवृत्तिप्रसङ्गभियाऽरजतभेदाग्रहं निषेधसि तर्ह्यरजतपुरोवर्तिनोर्भेदग्रह एवेत्यन्यथाख्यातिर्दुर्वारैवेत्यर्थः। नन्वस्त्वनपेक्षितभेदाग्रहोऽपि, न च निवृत्तिप्रसङ्गः अनपेक्षिताऽभेदज्ञानस्यैवान्यत्र निवर्तकत्वस्थितेरिति शङ्कते—तथाप्यनपेक्षितभेदाग्रहान्न निवर्तत इति। समाधत्ते—यद्येवमिति। येनैव न्यायेनापेक्षिताऽभेदज्ञानं निवृत्तिहेतुस्तेनैवापेक्षिताऽभेदज्ञानं प्रवृत्तिहेतुरिति भावः। क्वचित्तु नेदमरजतमित्यनपेक्षितभेदाग्रहो नाऽर्थः, तत् कुतो भेदग्रह इति चेत्? मा भूत् भेदग्रहो भेदाग्रहस्तावदित्यादिपाठः। तत्र चानपेक्षितभेदाग्रहोऽयं न तु भेदग्रह इति नान्यथाख्यात्यापत्तिरिति शङ्कार्थः। मा भूदन्यथाख्यात्यापत्तिः निवृत्त्यापत्तिस्तु दुर्वारेति सिद्धान्तार्थः। शेषं पूर्ववदिति।

अभेदे किं प्रमाणमस्तीत्ययुक्तम्। यदेवेदं तदेव रजतमित्यबाधितसामानाधिकरण्यप्रतीतेरभेदप्रमाणत्वादित्यपि न वाच्यमित्याह—अबाधितेति। अत्र हेतुः—यदेति। अयं विभाग इति। भ्रमस्थले सामानाधिकरण्यप्रतीतिर्नास्ति इतरत्र त्वस्तीति विभाग इत्यर्थः। कुत इति। न स्यादित्यर्थः। कुतो विभागेन भवितव्यमत आह—अभेदग्रहस्येति। ननु भेदाग्रहस्य व्यवहारमात्रजनकत्वेऽपि अविसंवाद्यभेदव्यवहारेण तज्जनकाभेदग्रहसिद्धिरिति केचित्, तन्न। व्यवहाराविसम्वादित्वव्यवहाराविसम्वादित्वयोर्विवेकाऽग्रहादेवोपपत्तेः। य एवाविसम्वादी स एव व्यवहार इति बोधसिद्धावविसंवादिव्यवहारस्यैवासिद्धेः 'उष्णं जलम्' इति सम्वादिव्यवहारेऽपि भेदाग्रहस्यैव शालिकानाथेन



हेतुत्वाङ्गीकाराच्च। अभेदग्रहासिद्धिवत्संसर्गग्रहासिद्धिरपि(१) संशयव्यवहारविषयत्वसाधने चासाधारणत्वात् स्वेच्छाकल्पितसंशयव्यवहारविषयात् घटादसपक्षादपि व्यावृत्तेः। इतरेभ्यो भिद्यत इति साधनेऽपि सिद्धसाधनत्वात्। न ह्युभयवादिसिद्धो धर्मस्तद्व्यतिरिक्तेभ्य आश्रयस्य भेदं न साधयतीति विशेष्यतोऽप्रसिद्धसंज्ञायाश्च बुद्धिस्थत्वमाप्तादिसंज्ञाव्यतिरिक्ता संज्ञाऽस्तीत्याप्तवचनादेः। शेषं सुगमम्।

स्वप्ने प्रमाणमादर्शयति—यत्रासत्यपीति[पृ.२७१]। नन्वस्त्वयथार्थत्वेन निरिन्द्रियप्रदेशावस्थितमनोजन्यात्मसाक्षात्कारादेः स्वप्नव्यवच्छेदः शुक्तिकारजतसंवेदनादेस्तु कुत इत्यत आह—अयथार्थत्वेऽपीति। नन्वयथार्थमुपरतेन्द्रियग्रामस्य ज्ञानमित्येतावदप्युपरतेन्द्रियग्रामस्य जायमानः स्थाणुः पुरुषो वेति किंसंज्ञकोऽयमिति च ज्ञाने व्याप्नोति। न च तेऽप्युपरतेन्द्रियग्रामस्य जायमानत्वात् स्वप्न एव न संशयानध्यवसायाविति वाच्यम्। उपरतेन्द्रियग्रामस्य जायमानत्वेऽपि संशयानध्यवसायलक्षणालिङ्गितत्वादेव, अन्यथा स्वप्नान्तिकस्यापि स्मृतित्वप्रसङ्गादित्याह—अनियतकोटित्वादिति। नन्वेवमप्ययथार्थादुपरतेन्द्रियग्रामस्य नियतकोटिकस्वप्नोपलब्ध्या स्मरणात् स्वप्नान्तिकापरपर्यायात् कुतो व्यवच्छेद इत्यत आह—अनुभवनमिति। तस्मादयथार्थमुपरतेन्द्रियग्रामस्य नियतकोटिकमनुभवनं स्वप्न

(१) संसर्गग्रहासिद्धिरपीत्यस्यानन्तरम् 'अङ्कपुटैकादशपङ्क्तिस्थद्रष्टव्येति ग्रन्थोऽनुसन्धेयः' इति ग्रन्थ आदर्शपुस्तके वर्तते परं स तत्रासम्बद्धप्राय इति टिप्पण्यां निवेशितोऽस्माभिरिति बोध्यम्।

इति लक्षणं द्रष्टव्यम् । शय्यायां संविष्टस्तिष्ठामीति यथार्थस्वप्नाव्यापकमिदं लक्षणमत आह—यद्यपीति । नन्विच्छा प्रयत्नहेतुस्तत्कथं बुद्धिपूर्वात् प्रयत्नादित्यत आह-बुद्धिपूर्वादिति । इच्छापूर्वक इति । कर्मधारयपक्षे सुषुप्तत्वानुपपत्तेरिति । यदा स्वप्न एव ज्ञानं स्वप्नज्ञानमिति कर्मधारयो विवक्षितस्तदा स्वप्नशब्दार्थस्य निरिन्द्रियात्मप्रदेशमनःसंयोगरूपत्वे सामानाधिकरण्यानुपपत्तिः, यावन्निरिन्द्रियात्मप्रदेशमनःसंयोगमनुवर्तमानज्ञानरूपत्वे च सुषुप्तत्वानुपपत्तिः, सर्वज्ञानोपरमरूपत्वात् सुषुप्तत्वस्येत्यर्थः । कारणं चिन्तासन्ततिः संस्कारसन्ततेः, तेन चिन्तासन्ततिपदं संस्कारसन्ततौ प्रयुक्तमित्यर्थः । संसर्गविषयश्च स्वप्नावभासमानसंसर्गविशेषाणां कदाचिदप्यनुपलम्भाभावादित्यर्थः । अत एवेति (पृ. २७५) । यतोऽत्यन्ताननुभूतोऽपि संसर्गः स्वप्नेऽभादित्यर्थः ।

अव्ययीभावे हीति(पृ. २७६) । अत्र परवल्लिङ्गता 'बुद्धिः प्रत्यक्षा'इत्यादिविशेषलिङ्गता, सा न स्यात् "अव्ययीभावो नपुंसकम्" इत्यव्ययीभावस्य नपुंसकत्वात् । प्रत्यक्षं बुद्धिः प्रत्यय इति स्यादित्यर्थः । न पुनः परवल्लिङ्गता प्रत्यक्षमित्यत्र समस्यमानोत्तरपदलिङ्गता, तथा सतीन्द्रियवाचकाक्षशब्दस्य नित्यनपुंसकत्वेन प्रत्यक्षमित्यस्यापि नित्यनपुंसकत्वप्राप्तौ प्रत्यक्षा बुद्धिरित्याद्यसिद्धौ कथं तदभाव आपद्येत ? इष्टापत्तेरिति । ननु प्रादिसमासपक्षेऽपि तस्य तत्पुरुषत्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः"[पा० सू० २-४-२६) इति वचनात् समस्यमानोत्तरपदलिङ्गत्वप्राप्तौ प्रत्यक्षपदस्य नित्यनपुंसकत्वे प्राप्ते प्रत्यक्षा बुद्धिरित्यादि कथमिति चेत् । इत्थं, तत्पुरुषेऽपि गत्या समासे "न प्राप्तापन्न गत्यादिसमासेषु"इति सूत्रेण समस्यमानोत्तरपदलिङ्गत्वप्रतिषेधादित्यवेहि । न त्वेकादशेति । घ्राणरसनचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थमनांसीत्यर्थः । पञ्चेति । घ्राणरसनचक्षुस्त्वक्श्रोत्राणीत्यर्थः । कुतो नैकादशेन्द्रियाणि इत्याशङ्क्यैकादशानुगतेन्द्रियलक्षणाभावादित्याह—सत्त्वेति । कुतो न पञ्चैवेत्यत आह—बौद्धोऽपीति । नन्वक्षमक्षं प्रतीत्योत्पद्यते इति भाष्येणाक्षजत्वं प्रत्यक्षलक्षणमुक्तं, तच्च स्मृत्यादावतिव्यापकमित्याशङ्क्य नेदं भाष्यं लक्षणप्रतिपादकं किं तु प्रत्यक्षलक्षणोपलक्षकप्रत्यक्षपदप्रवृत्तिनिमित्तप्रतिपादकमित्याह—तदेतदित्यादिना अनुमानादिव्यवच्छेद इत्यन्तेन(पृ. २७७) । साक्षात्कारि यथार्थं ज्ञानं प्रत्यक्षमिति लक्षणमिन्द्रियादावव्यापकमित्याशङ्क्य प्रमितिविशेषवाचकप्रत्यक्षशब्दार्थलक्षणमिदं न तु प्रमितिकारणविशेषवाचकप्रत्यक्षशब्दार्थलक्षणं, तस्यैव प्रकृतत्वादित्याह—न चैवमिति । ननु यद्यपि प्रमितिः प्रस्तुता तथापि प्रमित्या प्रमाणविशेषोऽपि बुद्धिस्थ इति किं तस्य लक्षणमत आह—प्रसङ्गादिति । तत्साधनमिति । साक्षात्कारियथार्थज्ञाने साधनमित्यर्थः । अत्र च येषां वाचकं प्रत्यक्षपदमिन्द्रियार्थसन्निकर्षे मुख्यमिन्द्रियादौ चरितार्थमिति मतं तेषां त-

त्साधनत्वं साक्षात्कारियथार्थज्ञानजनकेन्द्रियसन्निकर्षत्वं प्रत्यक्षलक्षणम् । येषां तु प्रमाणवाचकं प्रत्यक्षपदामिन्द्रिये मुख्यं सन्निकर्षादौ तूपचरितमिति मतं तेषां तत्साधनत्वमिन्द्रियमेव । तेजसो विशरणस्वभावत्वेन यथार्थज्ञानजनकचक्षुर्भिः साक्षात्कारियथार्थज्ञानजनकेन्द्रियत्वमेव वा प्रत्यक्षलक्षणम् । येषां तु प्रमाणवाचकं प्रत्यक्षपदामिन्द्रियतत्संनिकर्षयोरविशेषान्मुख्यमेवेति मतं तेषां तत्साधनत्वामिन्द्रियतत्सन्निकर्षव्यतिरिक्तत्वानधिकरणत्वे सति साक्षात्कारियथार्थज्ञानजनकत्वं प्रत्यक्षलक्षणम् । येषां तु प्रमाणवाचकं प्रत्यक्षपदमिन्द्रियतत्सन्निकर्षनिर्विकल्पकेषु मुख्यमिति मतं, तेषामिन्द्रियतत्सन्निकर्षनिर्विकल्पकव्यतिरिक्तत्वानधिकरणत्वे सति साक्षात्कारियथार्थज्ञानजनकत्वमेव प्रत्यक्षलक्षणामित्यानूह्यम् । तेन साधनत्वं नाम करणत्वं तच्च निर्वक्तुमशक्यमिति खण्डनं निरस्तम् । साक्षात्कारित्वं च ज्ञानत्वावान्तरजातिविशेषः । न च प्रमात्वेन परापरभावानुपपत्तिः बाधितत्वाभावानुभवत्वयोरव प्रमाशब्दप्रवृत्तिनिमित्तत्वेन प्रमात्वाद् बाधितत्वाभावश्चाभावत्वादेव न जातिः । अनुभवत्वमपि स्मृतित्वात्यन्ताभाव एवेति न जातिः । अस्तु वाऽनुभवत्वं जातिः तथाप्यनुभवत्वसाक्षात्कारत्वयोः परापरभावानुपपत्तेर्न जातिसङ्करः । यथार्थत्वमपि बाधितत्वात्यन्ताभावः । बाधितत्व चेदं बाधितमिदं बाधि—[१]

(१) इतोऽग्रे ग्रन्थ आदर्शपुस्तके त्रुटितोऽन्यपुस्तकानुपलब्ध्या च न निवेशनार्ह इति बोध्यम् ।

# शुद्धिपत्रम् ।

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| १ | १९ | 'गतमतेरभावे | 'गतमतेरभावे |
| | | गुणत्वाभावः | किं गुरुत्वाभावः |
| २ | २२ | सहकारीत्यागमः | सहकारीत्याममः । |
| | | तथैव | तथैव |
| ३ | २ | प्रामाण्यं | प्रामण्यां |
| ५ | १ | परस्परविरुद्ध | परस्परात्रिरुद्ध |
| १० | १३ | विशेषगुणलक्षणं | विशेषलक्षणं |
| १३ | ७ | अनवधारणे | अवधारणे |
| १६ | ११ | 'दुर्वारा जात्यादौ च, | 'दुर्वारा । जात्सादौ च |
| १९ | १७ | तारतम्यस्याजाति' | तारतम्यस्य जाति' |
| २२ | ११ | विनाऽप्योत्पाद्य' | विनाशोत्पाद्य' |
| २३ | ८ | आरभन्ते | आरभते |
| २४ | ३ | विशिष्टं | विशिष्ट |
| २४ | १९ | अन्यस्मादग्नि' | अन्यस्मायग्नि' |
| २६ | २ | 'हेतुमद्भावो | 'हेतुहेतुमद्भावो |
| ३१ | ७ | 'शादिति | 'शादति |
| ३१ | २० | 'कारणकम् | 'कारणम् |
| ३१ | २२ | 'समवायि' | 'समवापि' |
| ३२ | ५ | 'संयोगा | 'संयोग |
| ३४ | ४ | 'विरहे क्रिया | 'विरहाक्रिया |
| ३४ | १४ | 'संयोगेऽपीत्यर्थः | 'संयोगोऽपीत्यर्थः |
| ३६ | १४ | 'साहित्यमनु | 'साहित्यमु |
| ३६ | १८ | 'ऽविशेषो | विशेषो |
| ३७ | २ | तावदवयवेति | तदवयवेति |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ३७ | १९ | ऽवयविनाशयो | ऽवयविविनाशयो |
| ३७ | २२ | कारणत्वशङ्का | कारणशङ्का |
| ४२ | २५ | ऽभ्रान्तश्चेति | भ्रान्तश्चेति |
| ४५ | ११ | 'दिविलक्षण' | 'दिलक्षण' |
| ४६ | २५ | 'रपेक्षणीयेति | 'रपक्षीकरणेति |
| ५० | २१ | एषां | ऐषां |
| ५२ | ५ | 'पार्थिव | 'पार्थिर्व |
| ५७ | १ | विनाश | ऽविनाश |
| ६३ | ६ | बहुत्वत्वाद् | बहुत्वाद् |
| ६३ | १३ | 'ऽसमवायि | 'समवायि |
| ६४ | १४ | 'परिमाणं | 'परिमाण |
| ६४ | २५ | 'कारणासमवायि' | 'कारणसमवायि' |
| ६५ | २३ | 'मनुकुल' | 'मनूकुल' |
| ६७ | १८ | विशिष्टत्वमा' | 'विशिष्टमा' |
| ६८ | १२ | 'वधिकपृथक्त्वं' | 'वधिकंपृथक्त्व. |
| ७० | ७ | तत् | तत |
| ७० | ७ | अनादृत्य | नादृत्य |
| ७१ | ३ | 'मानमेक' | 'मानमक' |
| ७२ | ५ | चरम | परम |
| ७६ | १० | यथाभूतादवयवि' | यथाऽवयविभूतात् |
| ७७ | २ | 'निष्ठत्वेविरो' | 'निष्ठविरो' |
| ७७ | १८ | विभागारम्भे | विभाागारम्भे |
| ७८ | ६ | 'रादिःद्रव्या' | 'रादिद्रव्या |
| ७९ | ७ | 'रम्भककर्मगतयोः | 'रम्भकं कर्म गतयोः |
| ८१ | २३ | क्वचिद्' | क्वाचदे |
| ८३ | १ | 'संयोगेन | 'संयोगन |